द्वन्द्वैकवद्भावः। संक्षेपवचनमुद्देशः। तद् यथा—‘एष प्रत्ययसर्गो विपर्ययाशक्ति-तुष्टिसिद्ध्याख्यः’ (का, ४६)। विस्तरवचनं निर्देशः। तद् यथा—‘पञ्च विपर्ययभेदा भवन्ति’ (का, ४७), ‘भेदस्तमसोऽष्टविधः’ (का, ४८) इत्यादि। अनुक्रमश्च—पदार्थानामानुपूर्व्या सन्निवेशोपदेशोऽनुक्रमः, तद् यथा—‘प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः’ (का, २२) इत्यनेन। संज्ञोपदेशौ—संज्ञिप्रत्यायनार्थः शब्दः संज्ञा। सा च द्विविधा—अर्थनिबन्धना, स्वरूपनिबन्धना च। तत्रार्थनिबन्धना—अर्थवशेनार्थ-क्रियाऽपेक्षा, जात्याद्यर्थस्वरूपान्तर्भावी यथाऽर्थस्तथाभूतमेव संज्ञिनं प्रत्याययति। तद् यथा—पाचको लावक इति। स्वरूपनिबन्धना पुनः संज्ञिप्रत्यायनोपायमात्रं स्वरूप-मात्रोपकारिणी विनाऽवयवार्थं समयवशादतथाभूतमपि संज्ञिनं प्रत्याययति। तद् यथा—गजकर्णोऽश्वकर्ण इति। प्रयत्नतो भगवतः परमर्षेरार्षेण ज्ञानेन सर्वतत्त्वानां स्वरूप-मुपलभ्य संज्ञां विदधतो नास्ति स्वरूपनिबन्धनः शब्दः। तद् यथा—प्रधीयन्तेऽत्र विकारा इति प्रधानम्, पुरि शेत इति पुरुष इत्यादि। तन्मतानुसारिणामप्याचार्याणां ताभिरेव संव्यवहारान्नास्त्यपूर्वसंज्ञाविधानं प्रत्यादरः। उपदेशः—इतिकर्तव्यता, फलसमाख्यानमुपदेशः। तद् यथा—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्॥ (का, ६४)

एते सूत्रोपपत्त्यादयस्तन्त्रगुणाः। इतिकरणं प्रकारार्थम्। एवम्प्रकारा अन्येऽपि द्रष्टव्याः। तद् यथा—उत्सर्गोऽपवादोऽतिदेश इत्यादिः। तत्रोत्सर्गः—प्रकृतिविरूपं व्यक्तम्, सरूपश्चेत्यपवादः; तथा—‘तद्विपरीतः’ (का, ११) इत्युत्सर्गः, ‘तथाच पुमान्’ (का, ११) इत्यपवादः। ‘सामान्य-[4b]-मचेतनं प्रसवधर्मि व्यक्तं तथा प्रधानम्’ (का, ११) इत्यतिदेशः। इत्येवमन्या अपि तन्त्रयुक्तयः शक्या इह प्रदर्शयितुम्, अति-प्रसङ्गस्तु प्रकृतं तिरोदधातीति निवर्त्यते। सिद्धं तन्त्रयुक्तीनां सम्बन्धोपपत्तेस्तन्त्रमिद-मिति। किञ्च तन्त्रान्तराविरोधात्। यदि खल्वपीदं प्रकरणं स्यात् तन्त्रान्तरेण पातञ्जल-प(पा?)ञ्चाधिकरण-[1]वार्षगणप्रभृतीनामन्यतमस्य शेषभूतं स्यात्, तैश्चास्या-विरोधस्तत्र तत्रेति वक्ष्यामः। पूर्वतन्त्रशेषभावादिति चेत्, तुल्यमेतान्यपि पूर्वतन्त्रशेष-भूतानि; तेषामपि प्रकरणत्वप्रसङ्गः। अथ मतं सकलपदार्थसंग्रहात् तन्त्रान्तराण्येतानि, एवमिहापि सकलपदार्थसंग्रहात् तन्त्रान्तरत्वमभ्युपगन्तव्यम्। तस्माद् युक्तमेतत् तन्त्र-मिदमित्युपोद्घातः।

1 For Vārṣagaṇa and Vārṣagaṇya see Introduction.



आह—किंविशिष्टाय शिष्याय पुनरिदं तन्त्रं व्याख्येयमिति। उच्यते—जिज्ञासवे मतिमते मीमांसकायार्थिनेऽभ्युपगताय शिष्याय व्याख्येयं शास्त्रम्। कस्मात्? परमर्षि-प्रामाण्यात्। यस्माद् भगवान् विश्वाग्रजः परमर्षिर्भगवदासुरेर्जिज्ञासामुप-लभ्योत्तरगुणविशेषसम्पदं च व्याख्यातवान्। रज एव दुःखं तन्निराकरिष्णोर्विवेकोऽयं सत्त्वात्, सत्त्वं चास्मान्नानेत्येवमादिना वचनप्रतिपाद्योऽयमर्थो महद्भिश्चोक्तस्तस्माद् रजोदुःखोपघातोपघातकजिज्ञासोः सत्त्वाद् धर्मादिकुशलमूलविपाकोत्पित्सोर्दुःखत्रय-निवृत्तय इदं शास्त्रं प्रवृत्तम्। तदर्थात् परिणम्यते शिष्यस्येति कथं नाम शिष्यस्य निःश्रेयसेन योगः स्यादित्येवमर्थमिदं व्याख्यानं क्रियत इति।

आह—यदुक्तं जिज्ञासवे व्याख्यानं कर्तव्यमिति; तत्र कुतः पुनरियं जिज्ञासा, कस्मिन् वाऽर्थे भवतीत्युच्यते। यत्तावदुक्तं कुतः पुनरियं जिज्ञासा भवतीत्यत्र ब्रूमः—

[दुःखत्रयाभिघाताज् जिज्ञासा तदपघातके हेतौ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्॥ १॥]

**दुःखत्रयाभिघाताज्जिज्ञासा।** दुःखं [5a] रज इत्यनर्थान्तरम्। दुःखयतीति दुःखं भवतीति। त्रयमिति संख्यापदं सर्वद्रव्यविषयं तद् दुःखेन विशिष्यते। प्राधान्याच्च व्यतिरिक्तबुद्ध्या गृह्यमाणं सम्बन्धित्वादाधारस्य भेदनिबन्धनायाः षष्ठ्या निमित्तत्वं प्रतिपद्यते। दुःखानां त्रयं दुःखत्रयम्। अभिहन्यतेऽनेनेत्यभिघातः। कः पुनरयमभिघातो नाम? उच्यते—योऽसावुपर्युक्तदुःखत्रयेणान्तःकरणेन चेतनाशक्तेरभि-सम्बन्धः, तस्माद् दुःखत्रयाभिघाताज् जिज्ञासा। यदुक्तं कस्मिन्नर्थे भवतीति। तत्राह—**तदपघातके हेतौ।** अपहन्तीत्यपघातकः, तस्यापघातकस्तदपघातकः।

आह—तदपघातक इति समासानुपपत्तिः, प्रतिषेधात्। कर्तरि यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते। तस्मात् तस्यापघातक इति वक्तव्यम्। उच्यते—न, शास्त्रे दर्शनात्। ‘तत्प्रयोजको हेतुश्च’ (पा, १-४-५५) इति शास्त्रे दृष्टः प्रयोगः। पद-कारश्चाह—‘जातिवाचकत्वात्’। तथा—‘[1]कदाचिद् गुणो गुणिविशेषको भवति, कदाचित्तु गुणिना गुणो विशिष्यते’ इति चूर्णिकारस्य प्रयोगः। तस्मादनवद्यमेतत्। अयन्तु पिण्डार्थः—त्रिविधेन दुःखेनाभिहतो ब्राह्मणस्तदपघातकं हेतुं जिज्ञासते, को नामासौ हेतुः स्याद् यो दुःखत्रयमभिहन्यादिति।

आह—दुःखशब्दावचनमादौ, अमङ्गलार्थत्वात्। मङ्गलादीनि हि शास्त्राणि

1 Cf. इह कदाचिद् गुणो गुणिविशेषको भवति, तद् यथा—पटः शुक्ल इति, कदाचिच्च गुणिना गुणो व्यपदिश्यते—पटस्य शुक्ल इति, Mahābhāṣya 1. 4. 21.

प्रथन्ते वीरपुरुषकाणि च भवन्ति, अध्येतारश्च मङ्गलेनाभिहितसंस्काराः शास्त्रार्थानाशु प्रतिपद्यन्ते । दुःखमित्ययञ्चामङ्गलार्थः शब्दः, तस्मान्नारब्धव्यः शास्त्रादाविति । उच्यते—न, वाक्यस्यार्थे प्रयोगात् पदस्यानर्थक्यादमङ्गलार्थत्वानुपपत्तिः । वाक्यमर्थ-प्रत्यायनार्थं प्रयुज्यते विशिष्टार्थाभिधानात्, न पदम् । तथा हि पदार्थव्यतिरेकेन विशिष्ट एव वाक्यार्थः प्रतीयते, केवलन्तु पदं सामान्यार्थादप्रच्युतं विशिष्टार्थाभिधानास-[ 5b ]-मर्थम् । अत एव न विवक्षितार्थप्रत्यायनयोग्यतयोपादीयते । तद् यथा—देवदत्तेत्ययं शब्दः कर्तृवाचकत्वेनोपात्तः सर्वक्रियाविषयत्वान्नान्तरेण कर्मक्रिया-शब्दौ विशिष्टार्थः प्रतीयते । तथा गामिति कर्म सर्वक्रियाकर्त्रभिधाननिमित्तत्वात् । तथाऽभ्याजेति क्रिया सर्वकर्म-कर्तृविषयत्वात् । यदा तु 'देवदत्त गामभ्याज शुक्ला'मित्युच्यते तदा देवदत्तो गोशब्देन कर्मान्तरेभ्यो विच्छिद्य स्वात्मन्यवस्थाप्यते, क्रिया च गोशब्दश्च सर्वकर्तृभ्यो देवदत्त-कर्मतया व्यवस्थाप्यते, कर्तृकर्मणी चाभ्याजिक्रियायाः साधनभावेनैव नियम्येते, शुक्ल-शब्दश्च गोशब्दं सर्वगुणविषयमाधेयान्तरेभ्यो व्यवच्छिद्य स्वात्मन आधारत्वे नियम्यते—तद्विषयतां प्रतिपादयतीति । अनेन क्रमेण विशिष्टो वाक्यार्थः, केवलानां तु पदानां सामान्यार्थादप्रच्युतानां विशेषानभिधानादानर्थक्यम् । आह च—

'पृथङ्निविष्टतत्त्वानां पृथगर्थाभिपातिनाम् ।
इन्द्रियाणां यथा कार्यमृते देहान्न लभ्यते ॥
तथैव सर्वशब्दानां पृथगर्थाभिधायिनाम् ।
वाक्येभ्यः प्रविभक्तानामर्थवत्ता न लभ्यते ॥' इति ।

एवं सति कुतोऽयं निश्चयप्रतिलम्भो यद् दुःखशब्दोऽयममङ्गलार्थो यावता सन्दिह्यत एव, अयं किं स्वार्थप्रतिपत्त्यर्थमुपात्तोऽथ हेयत्वायेति । वाक्यस्य तु मङ्गलार्थ-त्वम्, दुःखप्रहाणार्थमुपादानात् । यद्धि दुःखप्रहाणार्थं वाक्यमुपादीयते तन्मङ्गलार्थं दृष्टम् । यथा—व्याध्यपगमः स्यादलक्ष्मीर्मा भूदिति । दुःखप्रहाणार्थं चेदं वाक्यमुपात्तं तस्मान्मङ्गलार्थमिदम् । तत्र यदुक्तं दुःखशब्दावचनमादावमङ्गलार्थत्वादित्येतदयुक्तम् ।

आह—त्रयग्रह-[ 6a ]-णानर्थक्यं गुणैकत्वात् । दुःखं रज इति प्रतिपन्नो भवान् । तच्चैकं शास्त्रे पठ्यते । तस्मात् त्रयग्रहणमनर्थकमिति । निमित्तभेदाद् भेदोपचार इति चेत्, स्यान्मतम्—यद्यप्येकं दुःखं तथाऽपि निमित्तानामध्यात्माधिभूताधिदैवलक्षणानां भेदादस्य भेदोपचारः करिष्यत इति । तच्च नैवम् । कस्मात् ? निमित्तानन्त्येन गुणा-नन्त्यप्रसङ्गात् । आध्यात्मिकं द्विविधं शारीरं मानसञ्च । शारीरं तावद् वातपित्त-श्लेष्मणां वैषम्यनिमित्तम् । तथा मानसं कामक्रोधलोभमोहविषादभयेर्ष्याऽरत्यविशेष-



दर्शननिमित्तम् । आधिभौतिकञ्च मनुष्यपशुमृगपक्षिसरीसृपस्थावरनिमित्तम् । आधि-दैविकं शीतोष्णवातवर्षाऽशन्यवश्यायावेशनिमित्तम् । तत्र निमित्तभेदात् त्रित्व-प्रतिज्ञस्य गुणानन्त्यप्रसङ्गः । स च नेष्टस्तस्मान्न निमित्तभेदात् त्रित्वम् । उच्यते—यदुक्तं रजस एकत्वात् त्रित्वानुपपत्तिः, तस्य निमित्तभेदात् त्रित्वोपचार इति सत्यमेतत् । यत्तूक्तं निमित्तानन्त्येन गुणानन्त्यप्रसङ्ग इति तदयुक्तम् । कस्मात् ? भेदेऽपि सति वर्णसंख्यावद् व्यवस्थानोपपत्तेः । तद् यथा—चत्वारो वर्णा इत्यस्याः संख्यायाः सति पैप्पलादादिभेदे तेषां ब्राह्मणत्वादिव्यतिरेकाभावान्न संख्यान्तरहेतुत्वम्, नो खल्वपि वर्णाव्यतिरेकादेकत्वं भवति ; एवं त्रीणि दुःखानीत्यस्याः संख्यायाः सति शारीरादि-भेदे तेषामाध्यात्मिकादिव्यतिरेकाभावान्न संख्यान्तरहेतुत्वम्, नो खल्वपि दुःखा-व्यतिरेकादेकत्वं भवितुमर्हति । किञ्चान्यत्—निमित्तभेदाद् भेदोपचार इति भवानेव प्रतिपन्नः, न चोपचारः परमार्थ इत्यलमस्थाने यत्नेन ।

आह—अभिघाताज्जिज्ञासायामतिप्रसङ्गः सर्वेषां सम्भवात् । यथाऽऽसुरे-दुःखत्रयाभिघाताज्जिज्ञासा भवतीत्येतदिष्टं तेन सर्वेषामभिघातोऽस्तीति [ 6b ] सर्वेषां जिज्ञासा-प्रसङ्गः । अथ सति दुःखाभिघाते कस्यचिज्जिज्ञासा भवति, कस्यचि-न्नेति । नन्वेवमिच्छामात्रम्, प्राक् प्रसङ्गाच्च । प्रागप्यासुरेर्जिज्ञासाया दुःखत्रयाभि-घातो न चास्यात्यन्तिके हेतौ जिज्ञासा बभूव ; तेन किं प्राप्तम्, पश्चादस्य यतो बभूव तद् वक्तव्यम् । यथाऽन्यत्र ब्रह्मणोऽभ्यासनिमित्तादधर्मक्षयात् पूर्वधर्मानुग्रहाच्च विविदिषा, तथाऽन्येषां कुशलमूलाभ्यासपरिपाकान्न चापदिष्टमतो लघूक्तमेतत् । किञ्चान्यत्—तदपघाताच्चानिर्मोक्षोऽकृतत्स्नत्वात् । मोक्षो हि [1]काम-रूपारूप्य-धातुत्रया-दिष्यते, दैवमानुष्यतैर्यग्योनित्रयाद्वा । एकदेशश्च संसारस्य दुःखत्रयम् । तस्मात् प्रयोजनमप्ययुक्तम् । किञ्च निमित्तान्तरसद्भावात् । दिव्यकामध्यानसुखानपेक्षस्यापि [2]विविदिषा सम्भवति, न केवलं तापोद्विग्नस्यापि । तस्मान्निमित्तमप्ययुक्तम् । किञ्चा-

1 For various types of dhātus, see *Sphūṭārthābhidharmakośa-vyākhyā* of Yaśomitra, first *Kośasthāna*, p. 58, where the author quotes the following Sūtra—आयुष्मानानन्दो भगवन्तमेतदवोचत् । कियता भदन्त पण्डितो धातुकुशलो भवति । भगवानाह पण्डित आनन्द······त्रीनपि धातून् जानाति पश्यति यथाभूतम्—कामधातुं रूपधातुमारूप्यधातु-मिति······.

2 एकत्वञ्च पृथक्त्वञ्च नित्यं चैवमचेतनम् ।
सूक्ष्मं सत्कार्यमक्षोभ्यं ज्ञेया विविदिषा च सा ॥

कार्यकारणचयकरी विविदिषा प्राकृतिकी वृत्तिः—*Sāṁkhyakrama-dīpikā* on the *Sūtra* पञ्च कर्मयोनयः ।

न्यत्—उभयथा चासम्भवात्। परिकल्पमाना खल्वपीयं जिज्ञासा पुरुषस्य वा स्याद् गुणानां वा ? किञ्चातः—तत्र तावत् पुरुषस्य सम्भवति। कस्मात् ? नैर्गुण्याभ्युपगमात्। [1]इच्छा-द्वेष-प्रयत्न-सुख-दुःख-धर्माधर्म-ज्ञान-संस्काराणामात्मगुणत्वं न भवद्भिरभ्युपगम्यते, न गुणानाम्—आचेतन्यात्। न ह्यचेतना घटादयो हिताहितप्राप्तिपरिहारं जिज्ञासमाना दृश्यन्ते। न च चेतना भवतां गुणाः, सामान्यमचेतनं प्रसवधर्मि प्रधानम् (का, ११) इति वक्ष्यमाणवचनत्वात्। किञ्चान्यत्—तत्त्वान्तरानुपपत्तेः। न च गुणपुरुषव्यतिरिक्तं वः तत्त्वान्तरमस्ति, यस्य जिज्ञासा परिकल्पमाना परिकल्प्येत। तस्मादनुपपन्ना जिज्ञासा। उच्यते—यदुक्तमभिघाताजिज्ञासायामतिप्रसङ्गः, सर्वेषां तत्सम्भवादिति। अत्र ब्रूमः—न, अभिघातत्वेनाप्रतिपत्तेः। यद्यप्यविशिष्टोऽभिघातस्तथाऽपि सर्वे नैनमभिघातत्वेन प्रतिपद्यन्ते। तथा हि, सत्स्वाध्यात्मिकादि-दुःखेष्वर्जन-रक्षण-क्षय-सङ्ग-हिंसासु च प्रीत्यभि-[ 7a ]-ष्वङ्गादेषां न विषयेषूद्वेगापद्वेषौ। न च विषयपरित्यागो भवति, तस्मान्नाविशिष्टोऽभिघातः। विशेषेऽभिघातबुद्धेर्निमित्ताभिधानमिति चेत्, अथापि स्याद् येयमसति विशेषे सर्वप्राणभृतामासुरेरेव भगवतो दुःखत्रयाभिघातबुद्धिर्भवति न पुनरन्येषामित्यत्र निमित्तमभिधानीयम्। न ह्यन्तरेण निमित्तमसौ विशेषेऽवस्थापयितुं शक्यत इति। एतच्चायुक्तम्। कस्मात् ? प्रश्नासम्बन्धात्। कुतो जिज्ञासा भवतीत्येवं चोदकेन पूर्वमकारि प्रश्नस्तस्याश्च साक्षात्कारणमभिघातः, कारणान्तराणामनभिधानादित्यस्यैव निर्देशः कृतः। यत्तु खल्विदानीं कारणकारणमपि पृच्छ्यते तदनवस्थाप्रसङ्गभयान्नोच्यते। अथ निर्बन्धः क्रियते, तेन पूर्वधर्मानुग्रहस्य कुशलमूलाभ्यासपरिपाकस्य कारणकारणत्वं न प्रतिषिध्यत इति तदेव किं न गृह्यते। एतेन प्राक्प्रसङ्गः प्रत्युक्तः। यत्तूक्तं तदभिघाते चानिर्मोक्षोऽकृत्स्नत्वादित्येतदप्ययुक्तम्। कस्मात् ? शास्त्रार्थानवबोधात्। 'अष्टविकल्पदैवतैर्यग्योनिश्च[2] पञ्चधा भवति। मानुष्यश्चैकविधः' (का, ५३) इत्येतावानस्माकं संसारः। न तु तद्व्यतिरिक्ताः कामरूपारूप्यधातवः क्वचिदपि सिद्धाः। चतुर्दशविधे च संसारे या सुखमात्रा सा दुःखभूयस्त्वात् तच्छब्दवाच्या भवतीति। तथा चोक्तम्—

'अत्र जन्मजरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं समासेन'[3] ॥ (का, ५५)।

1 Cf. इच्छा-द्वेष-प्रयत्न-सुख-दुःख-ज्ञानान्यात्मनो लिङ्गमिति, NS. I. I. 10.

2 Also read as 'तैर्यग्योनश्च'.

3 This reading is also found in the *Māṭharavṛtti*. But the usual reading is 'दुःखं स्वभावेन'.



दृश्यते च लोके भूयसा ग्रहणम्। तद् यथा—आम्रवणमिति। तस्मात् कृत्स्नविकल्पप्रतिषेधोऽयम्। यत् पुनरेतदुक्तं दिव्यकामध्यानसुखानपेक्षस्यापि विविदिषासम्भवान्निमित्तमयुक्तमिति तदप्यनुपपन्नम्। कस्मात् ? उत्तरत्र प्रतिषेधात्। इष्टमेवैतत् संगृहीतम्। तथा चोत्तरसूत्रेण प्रतिषेत्स्यत्याचार्यः—

'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' (का, २)।

तस्माद् दि-[ 7b ]-व्यसुखानपेक्षस्योक्ता विविदिषा। ध्यानसुखमपि क्रमातिशयौ नातिवर्तते, तदप्यत्रैव संगृहीतम्। तस्मात् प्रतिषेध्य एवायं पक्ष इति न किञ्चिदभिधीयते। यदप्युक्तमुभयथाऽसम्भवाज्जिज्ञासाऽनुपपत्तिरिति, अस्तु गुणानां जिज्ञासा। यत्तूक्तमाचेतन्यादसम्भव इति सत्याचेतन्ये बुद्धेरिच्छादिसद्भावमुत्तरत्र प्रतिपादयिष्यामः। तस्मादुपपन्ना जिज्ञासा।

आह—तच्छब्दानर्थक्यं प्रतिपदमसम्बन्धात्। योऽयमाचार्येण तच्छब्दः सूत्रे पठितोऽस्य खलु प्रतिपदमसम्बन्धात् स्वल्पामप्यर्थवत्तां नोपलभामहे, तस्मान्नैनमपुष्कलार्थमध्येष्यामह इति। उच्यते—कथं हि नाम प्रयोक्तृपारतन्त्र्याच्छब्दस्य शब्दान्तरेण सम्बन्धो न स्यादिति। आह, न ब्रूमः—अविद्यमानसम्बन्धोऽसम्बन्धः, किन्तर्ह्ययुक्तसम्बन्धो यः स खल्वसम्बन्धः। तद् यथा—अनाचारो माणवक इति द्रव्येण क्रियाशक्तित्वान्न शक्यं किञ्चिदनाचारवता क्षणमप्यवस्थातुम्, अयुक्तं त्वाचरन्ननाचार इत्युच्यते, तथा चास्य तच्छब्दस्य प्रतिपदं सम्बन्धो न युक्तस्तस्मादनर्थकस्तच्छब्दः। आनन्तर्याजिज्ञासाशब्दस्येति चेत्, स्यान्मतम्—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (महाभाष्य १-१-४२) इत्यनया युक्त्या जिज्ञासाशब्दस्य तच्छब्देनाभिसम्बन्धः शक्य इति। तच्च नैवम्। कस्मात् ? तदपघाते प्रयोजनासम्भवात्। नहि जिज्ञासाऽपघाते किञ्चित् प्रयोजनमस्तीति सत्यपि सम्बन्धे न तच्छब्देनार्थः। अभिघातस्येति चेत्, अथापि स्याद् यदि जिज्ञासाऽपघातेन किञ्चित् प्रयोजनमस्तीति। अतस्तत्सम्बन्धो नेष्यते। तेन तर्ह्यभिघातशब्देनास्याभिसम्बन्धः करिष्यते, तथा चापि तच्छब्दोऽर्थवान् भविष्यतीति। एतदनुपपन्नम्। कस्मात् ? निमित्तावस्थाने पुनरुत्पत्तेः। नैमित्तिकोऽयमभिघातस्तस्य निमित्तवत्त्वादात्यन्तिकोऽपघातो न स्यात्। [ 8a ] इतरथा ज्वरनिमित्तो दाह इव शीतद्रव्यसंस्पर्शात् प्रशान्तोऽपि निमित्तावस्थानात् पुनः पुनः प्रवर्तते इत्यस्याफलत्वं व्यायामस्य। त्रयशब्दस्येति चेन्न, पारतन्त्र्यात्। आश्रयपरतन्त्रा हि संख्या, तस्या नान्तरेणाश्रयोपघातमपघातः शक्यः कर्तुम्। अनर्थकश्च समास इति सुतरां तच्छब्देन नार्थः। दुःखशब्दस्येति

चेत्, स्यान्मतम्—यद्येतेषां पदानामभिसम्बन्धे यथोक्तदोषोपपत्तिः, दुःखशब्दं तर्हि तच्छब्देनाभिसंभन्त्स्यामः। तस्मिन्नेष निषेधो विशतीति। तच्च नैवम्, कस्मात्? अनेकपदव्यवधानात्। कथमनन्तरवृत्तिना सर्वनाम्नाऽनेकपदव्यवहितस्य दुःखशब्दस्याभिसम्बन्धः शक्येत प्रतिपत्तुम्, तस्मान्न किञ्चिदेतत्। किञ्चान्यत्—उपसर्जनत्वात्। अयं खल्वपि दुःखशब्दः समास उपसर्जनीभूतः। न चैकस्मिन् काले शब्दस्य प्रधानत्वमुपसर्जनत्वञ्च युक्तितः सम्भवति। प्रधानस्य च पदार्थेनाभिसम्बन्धः। तस्माद् विवादास्पदमेवैतत् सूत्रम्। किञ्चान्यत्—नित्यानामपघातानुपपत्तेः। इह नित्यानामपघातः कर्तुं न शक्यते, तद् यथा—पुरुषाणाम्; अनित्यानां चापघातो दृष्टः, तद् यथा—ज्वरादीनाम्। नित्यञ्च दुःखम्, तस्मात् तदपघातेऽभ्युत्थानानर्थक्यम्। वृत्त्यपघाते तदपघात इति चेत् स्यात् पुनरेषा बुद्धिः, सत्यम्—नित्यानामपघातो न युक्तितः सम्भवति। न तु वयं गुणलक्षणस्य दुःखस्यापघातं ब्रूमः, किन्तर्हि वृत्तिरस्याभिभूयत इति। तच्च नैवम्। कस्मात्? उक्तोत्तरत्वात्। उक्तमत्रोत्तरं निमित्तावस्थाने पुनः पुनरुत्पत्तेरिति। तस्मादयमप्यमार्गः। किञ्चान्यत्—अविशेषात्। कल्पयित्वाऽपि वृत्त्यपघातं वृत्ति-वृत्तिमतोरनन्यत्वाद् वृत्त्यपघाते वृत्तिमदपघातः प्राप्त इति नास्ति कश्चिद् विशेषः। तस्मात् क्लेशोऽयं परिहार इति नार्थस्तच्छब्देन। उच्यते—यदुक्तं तच्छब्दानर्थक्यं प्रतिपदमसम्बन्धादित्यस्तु दुःखशब्देनाभिसम्बन्धः। [8b] तत्सम्बन्धे यथोक्तदोषोपपत्तिरिति चेत्, स्यान्मतम्—यदि तर्हि तच्छब्दस्य दुःखशब्देनाभिसम्बन्धोऽभ्युपगम्यते। तेन येऽस्माभिः पूर्वमभिहिता दोषास्ते प्रसज्यन्ते। तस्मात् प्रतिषिद्धस्य पक्षस्य परिग्रहे साहसमात्रमिति। एतच्च नैवम्। कस्मात्? प्रतिविधानात्। सत्यमसति प्रतिविधाने साहसमात्रं स्यात्, प्रतिविधीयते तु; तस्माददोषोऽयमिति। किन्तदिति चेत्, स्यान्मतम्—उच्यतां तर्हि किं तत् प्रतिविधानं यस्यावष्टम्भेनानेकदोषव्याहतोऽप्ययं पक्ष आश्रीयते, न ह्यनुक्तमस्माभिराकारमात्रेण शक्यं प्रतिपत्तुमिति। उच्यते—बाढम्। यत् तावदुक्तमनेकपदव्यवधानान्न दुःखशब्दस्य तच्छब्देनाभिसम्बन्ध इति, अत्र ब्रूमः—न, अनभ्युपगमात्। यो ह्यनन्तरकृतं शब्दस्य शब्दान्तरेण सह सम्बन्धमाचष्टे तं प्रत्ययमुपालम्भः स्यात्, वयं त्वर्थकृतं सम्बन्धमाचक्ष्महे। तथा चोक्तम्—

'यस्य येनाभिसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतस्त्वसमानानामानन्तर्येऽप्यसम्भवः॥

1 The MS. reads 'तस्य तत्'. This verse is quoted by Vātsyāyana with some variants in reading—

'यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥' N. Bh. 1. 2. 9.

Vācaspati quotes the first line only with the reading—'यस्य येनाभिसम्बन्धो दूरस्थस्यापि तस्य सः:', NVT. 1. 1. 5, p. 133.



किञ्चान्यत्—शास्त्रे दर्शनात्। शास्त्रे च व्यवहितानामपि सर्वनाम्नामभिसम्बन्धो दृश्यते। [1]'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्व-तलौ' इत्यत्रार्थकृतश्च सम्बन्धः शब्दानामभ्युपगतः। 'ङ्याप् प्रातिपदिकात्' (पा, ४-१-१), 'बहुषु बहुवचनम्' (पा, १-४-२१), 'सुपो धातुप्रातिपदिकयोः' (पा, २-४-७१), 'अलुगुत्तरपदे' (पा, ६-३-१) इत्येवमादीनामभिसम्बन्धाभ्युपगमात्। तथा—[2]'अनड्वाहमुदहारिणि भगिनि वहसि या त्वं शिरसि कुम्भमवाचीनमभिधावन्तमद्राक्षीः' इति वार्त्तिके दृष्टान्तः। न ह्यत्र सत्यानन्तर्ये शिरसाऽनडुहो वहनं कुम्भस्य वा सरणमुपपद्यते। यथा चात्र व्यवहितानामभिसम्बन्धस्तथेहापि द्रष्टव्यः। यत् पुनरेतदुक्तमुपसर्जनत्वात् पदान्तरेणानभिसम्बन्ध इति, एतदनुपपन्नम्। कस्मात्? संसारादपोद्धारे बुद्ध्यवस्थितस्य स्वातन्त्र्योपपत्तेः। सत्यमुपसर्जनस्य पदान्तरेणाभि-[9a]-सम्बन्धो नोपपद्यते। न तु वयं समासवृत्तेरेव तच्छब्देनाभिसम्बन्ध इति प्रतिपद्यामहे, किं तर्हि समासादपोद्धृतस्य बुद्धिव्यवस्थितस्योपजनितस्वातन्त्र्यस्य शब्दान्तरेण सम्बन्धमिच्छाम इति। अथैतदनिष्टम्—'योगप्रमाणे च तदभावेऽदर्शनं स्यात्', 'अथ शब्दानुशासनम्', 'केषां शब्दानाम्' इति चैत्रमादीनां प्रयोगाणां विरोधः प्राप्नोति; अनिष्टञ्चैतत्। यत् पुनरेतदुक्तं नित्यानामपघातानुपपत्तेर्वृत्त्यपघाते च तदपघातप्रसङ्गादिति, एतदप्यनुपपन्नम्। कस्मात्? गुणशक्तेः प्रयोजनोपरमे सत्यात्मकल्पेन व्यवस्थानाभ्युपगमात्। नैतदभ्युपगम्यते गुणस्योच्छित्तिर्भवति, वृत्तिर्वास्याभिभूयते; किं तर्हि पुरुषार्थनिबन्धना चरितार्था शक्तिरस्य पुरुषं प्रति प्रवृत्तौ प्रयोजनासम्भवादात्मकल्पेन व्यवतिष्ठत इत्येतद्विवक्षितम्। तस्माद् युक्तमेतत् तदपघातके हेतौ जिज्ञासा प्रवर्त्तत इति।

**दृष्टे साऽपार्था चेत्**—स्यादेतत्, प्रत्यक्षो दुःखप्रतीकारहेतुरस्ति। तस्य समतिक्रमे किं प्रयोजनम्? तद् यथा—शारीरस्य तावदयमपगमहेतुरनेकद्रव्यरसायनोप-

1 Cf. सिद्धं तु यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ, *Vārttika* V, on Pā. 5. 1. 119.

2 Cf. अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति *Mahābhāṣya*, 1. 1. 58, on the first *Vārttika*.

योगः, मानसस्यापि मनोज्ञस्त्री-पान-विलेपन-भोजन-वस्त्रालङ्कारादिविषयसम्प्राप्तिः। आधिभौतिकस्य नीतिशास्त्राभ्यासः, शस्त्रास्त्रकुशलता, विषमस्थानानध्यासनञ्च। आधिदैविकस्यापि यथाकालं विविधनिवसनास्तरणगर्भगृहप्रासादजालान्तर-चन्दनव्यजन-मणिहारादिसेवा-विविधौषध-मङ्गल-स्तुति-मन्त्रप्रयोगानुष्ठानमिति दृष्टे हेतौ सा जिज्ञासाऽपार्थेति चेत्—**नैकान्तात्यन्ततोऽभावात्।** एतच्च नैवम्। कस्मात्? एकान्तात्यन्ततोऽभावात्। एकान्तो नाम नियमेन भावः, अत्यन्तं भूतस्याविनाशः। एकान्तश्च अत्यन्तश्च ते एकान्तात्यन्ते, तयोरभाव एकान्तात्यन्ततोऽभावः, तस्मात्। षष्ठीस्थाने पञ्चमी, षष्ठ्या एव वा तसिः—'पष्ठ्या व्याश्रये' (पा, ५-४-४८) इति [ 9b ] योगविभागात्। असमासकरणं वृत्तपूरणार्थम्। मानसस्य च दुःखस्य प्रतीकारे दोषान्तरोपसंग्रहार्थम्। तथा हि, स्त्र्यादीनां सत्येतस्मिन् दोषद्वये न शक्यमर्जनं कर्तुमस्वाभाविकत्वात्, सत्यर्जने रक्षणमशक्यं साधारणत्वात्, सति च रक्षणे क्षयः कृतकत्वात्, सङ्गाच्चानुपशमो भूतोपघातमन्तरेण चासम्भव इत्येते दोषाः।

आह—कथमेतदवगम्यते यद् दृष्टस्य हेतोरनैकान्तिकत्वमनात्यन्तिकत्वं चेति। उच्यते—प्रत्यक्षमेवैतदुपलभ्यते यदायुर्वेदविहितस्य क्रियाक्रमस्याभियुक्तमात्मवन्तं भेषजभिषक्परिचारकसम्पन्नं प्रत्यानर्थक्यम्। आह च—

सर्वेषां व्याधिरूपाणां निदानं त्रिविधं स्मृतम्।
आहारश्च विहारश्च कर्म पूर्वकृतं तथा॥
तत्राहारविहारोत्थान् रोगान् द्रव्यमपोहति।
यस्तु कर्मकृतो व्याधिर्मरणात् स निवर्त्तते॥

पुनरप्याह—

सोपद्रवः सर्वरूपो बलमांसेन्द्रियापहः।
सारिष्टश्चैव यो व्याधिस्तं भिषक् परिवर्जयेत॥

इत्येवमनैकान्तिकत्वम्। अनात्यन्तिकत्वं तु निवृत्तानामपि व्याधीनां पुनरुत्पत्तिदर्शनात्। महता खल्वपि प्रयत्नेन निवर्त्तिता व्याधयः पुनरुत्पद्यन्ते। तथा चोक्तम्—

'पुनर्ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा' इति।

तस्माद् यथैवास्यायुर्वेदादेः प्रतीकारहेतुत्वं प्रत्यक्षसिद्धमेवमेकान्तात्यन्ततोऽभावोऽपि। तथा मानसस्य च। यथा च शारीरदुःखप्रतीकारहेतवो नैकान्तिकास्तथा



स्त्र्यादयोऽपि। कस्मात्? तत्सन्निधाने विषयान्तराभिलाषदर्शनात्। यदि हि स्त्र्यादयो विषयाः सर्वदा दुःखप्रतीकारसमर्था भवेयुः, किमिति तेषु सन्निहितेषु विषयिणो विषयान्तरजिघृक्षा स्यात्? एवमनैकान्तिकत्वम्। अनात्यन्तिकत्वमपि, निवृत्तेच्छानामपि भूयः प्रार्थनासद्भावात्। यदि हि विषयोपभोगोऽत्यन्तमेव मानसं दुःखमपहन्यात्, किं प्राप्तं येन भूयस्तं प्रति विषयिणोऽभिलाषः स्यात्। किं कारणम्? यस्मा-[ 10a ]-न्नह्यविद्यमाने तमसि देवदत्तस्य प्रदीपं प्रत्यपेक्षा भवति। दृश्यते च निवृत्तेच्छानामपि विषयोपभोगाद् विषयिणां भूयो विषयाभिलाषः। तेन मन्यामहे नायं दृष्टो हेतुर्दुःखमपहन्ति, किन्तर्हि सुतरां वृद्धिं करोति। आह च—

'न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥' (मनु २।९४) 1

अपर आह—

संवेद्यत्वाद् गुरुत्वाच्च निन्दितत्वाच्च साधुभिः।
सर्वत्रासन्निधानाच्च न दृष्टो हेतुरिष्यते॥

संवेद्यत्वात्—भोगसाधनविकलानामर्थिनां मध्ये विषयिणोपयुज्यमानास्तः संवेद्यन्ते, तेषामप्रदायोपयुज्यमानं नैर्घृण्यमाविष्कुर्यात्। विषयिणा प्रदीयमानो वाऽर्थिभ्यः परिमितत्वादवच्छिद्येतेत्यनुपायोऽयं दुःखापघाते बुद्धिमताम्। 1 किञ्च गुरुत्वात्—भोगानां विविधनिवसन-स्त्री-पानभोजनविलेपनादीनां सामग्र्येण सुखमुत्पद्यते, नान्यतरवैकल्ये। सामग्र्यं चैषामस्वाभाविकत्वादनुपपन्नम्। आह च—

नाभिजातिं न विज्ञानं न च शौर्यमपेक्षते।
लक्ष्मीः संस्कारयोगाच्च क्वचिदेवावतिष्ठते॥ 2

इत्येवमनेकाश्रयत्वाद् गुरुर्विषयभोगः। किञ्च, निन्दितत्वाच्च साधुभिः—निन्दितः खल्वपि साधुभिर्विषयोपभोगः। यस्मादाह—

आयासाश्च विघाताश्च विप्रलम्भभयानि च।
यच्चान्यदशिवं लोके तत् कामेभ्यः प्रवर्त्तते॥

पुनरप्याह— 2

अयं स क्षेत्रियो व्याधिरयमात्यन्तिको ज्वरः।
इदमास्यदमीतीनामेष योनिः सपाप्मनाम्॥
अगाधमेतत् पातालमेष पङ्को दुरुत्तरः।
क्लेशव्याधिसमाकीर्णमेतच्छ्वभ्रं भयावहम्॥

विविधायासशोकानामेतदायतनं महत्।
दैन्यश्रमविषादानामेतत् क्षेत्रमपावृतम् ॥
यस्माद् विषयसम्भोगाद्विहगः पञ्जरादिव।
गतो वनेषु रमते स सुखानि समश्नुते ॥

तस्मात् साधुभिरपाकृतत्वादसाधुर्विषयोपभोगः। किञ्च, सर्वत्रासन्निधानात्। न [ 10b ] हि सुप्रतिनिविष्टस्यापि कामिनः सर्वत्र विषयसन्निधानेन भवितव्यम्, नो खल्वप्येकस्मिन् देशे सम्भवति विषयाभावप्रसङ्गात्। तस्मादवश्यं वियोगेन भवितव्यम्। वियोगे च सति ध्रुवोऽनिष्टानुबन्ध इति कोऽर्थो विषयपरिग्रहेण। तत्र यदुक्तं दृष्टस्य हेतोः सद्भावादपार्थिका जिज्ञासेति, एतदयुक्तम्।

आह—यद्येकान्तात्यन्ततोऽभावाद् दृष्टे हेतावपरितोषस्तेन तर्ह्यस्त्ययमन्यो हेतुरुभयदोषवर्जितः, स कस्मान्न परिगृह्यते। कोऽसाविति चेत्, स उच्यते—शास्त्रोक्तः कर्मविधिः। स ह्यैकान्तिकः। कथम्? एवं ह्याह—'पशुबन्धेन सर्वाल्लोँकाञ्जयति'। न तूक्तं कदाचिज्जयति कदाचिन्नेति फलस्य प्रत्यक्षानुपलब्धेरनैकान्तिकत्वमिति चेत्, स्यान्मतम्—प्रत्यक्षत एवेदं विहितस्य कर्मणः फलं नोपलभ्यते। तथा हि पुत्रकाम इष्टिं निरूप्य दुहितरमपि न प्राप्नोति, अर्थकामश्च कर्म कृत्वा माषकमपि न लभते। तस्मान्नायमैकान्तिक इति। एतच्च नैवम्। कस्मात्? साधनवैकल्यात् तदनुपपत्तेः। अनेकसाधनसाध्यो हि कर्मविधिः। यत्र फलं नोपलभ्यते तत्र साधनवैकल्यमनुमातव्यम्। कस्मात्? न ह्येतदिष्टं सति कारणे कार्यं न भवति। किञ्चान्यत्—संसाराभावप्रसङ्गात्। यदि खल्वपि कर्मणः फलवत्त्वं नेष्यते तेन तन्निमित्तस्य संसारस्याभावप्रसङ्गः। अनिष्टश्चैतत्। तस्मात् सिद्धमस्यैकान्तिकत्वम्। आत्यन्तिकत्वमपि सिद्धमेव, यस्मादाह—'अपाम सोमममृता अभूम' ( अथर्वशिरः ३ ) इति। अत्र सोमपानादमृतत्वप्राप्तिः श्रूयते। तस्मात् तदेवानुष्ठातव्यम्, किमन्येन हेतुना परिकल्पितेनेति जिज्ञासाऽपार्थैवेति। उच्यते—

[ दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥ ]

**दृष्टवदानुश्रविकः।** अनुश्रूयत इत्यनुश्रवः, अनुश्रवे भव इत्यानुश्रविकः। दृष्टेन तुल्यं वर्त्तते दृष्टवत्; किमसावनभिप्रेत इति वाक्यशेषः।

आह—कः पुनरयमनुश्रवः। उच्यते—मन्त्रब्राह्मणं यावद्वा पुरातनमनुश्रूयमाणं



प्रामाण्येनाभ्युपग-[ 11a ]-म्यते तत्रभवद्भिः; यथा श्रुतिनिबन्धनाः स्मृतयः, अङ्गानि वेदास्तर्का वा। यथाऽऽह—

वेदवेदाङ्गतर्केषु वेदसंज्ञा निरुच्यते। इति।

आह—किं पूर्वस्मादेव हेतोरयमानुश्रविको हेतुरनभिप्रेत इति, नेत्युच्यते—किं तर्हि? **स ह्यविशुद्धिक्षयातिशययुक्तः** इति। स इत्यानुश्रविकस्य हेतोः प्रतिनिर्देशः, हिशब्दो यस्मादर्थे। अविशुद्धिश्च क्षयश्चातिशयश्च तैर्युक्तः। एतदुक्तं भवति—यस्मादयमानुश्रविको हेतुरविशुद्धोऽनित्यस्तारतम्यवांश्च, अतो दृष्ट इवानभिप्रेतः। तत्राविशुद्धियुक्तस्तावत् हिंसाविधानात्। यदाह ब्राह्मणे—[1]'ब्राह्मणमालभेत' इत्यादि। तथा—

षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः ॥ इति।

हिंसा चाविशुद्धिः प्राणिनामिष्टशरीरव्यापादनात्।

आह—तदनुपपत्तिः शास्त्रचोदितत्वात्। यदि शास्त्रे चोदितेयं हिंसा न स्यात्, मुक्तसंशयमविशुद्धित्वमस्याः प्रतिपद्यामहे। शास्त्रचोदिता तु, तस्मान्नेयमविशुद्धिः। तत्प्रामाण्यानभ्युपगमाददोष इति चेत्, स्यान्मतम्—वेदप्रामाण्यमभ्युपगच्छतामसंशयमेतदेवं स्यात्। हेतुवादकुशलास्तु वयम्, तस्मादाधीयतां यदि कश्चिदस्त्युभयपक्षप्रसिद्धो हेतुर्यतो न संशयप्रत्ययः स्यादिति। एतच्चायुक्तम्। कस्मात्? अभ्युपगमविरोधात्। दृष्टमनुमानमाप्तवचनञ्चेति प्रमाणत्रयमभ्युपगतं भवद्भिः। इदानीं वेदस्याप्तवचनत्वे सत्यप्रामाण्यं ब्रुवतः स्वमतव्याघातः। तस्मादयुक्तमेतत्। वेदस्याप्तवचनत्वानुपपत्तेरदोष इति चेत्, स्यान्मतम्—आप्तवचनत्वं प्राक् प्रसाध्यास्य वेदस्य पश्चादयमुपालम्भो युक्तमभिधातुं स्यात्। तत् त्वसिद्धम्। तस्मादनुपालम्भोऽयमिति। एतदप्ययुक्तम्। कस्मात्? पुरुषबुद्धिपूर्वकत्वे सति रागादियोगाच्छब्दो विचारार्हः स्यात् किमाप्तवचनं न वेति। अपुरुषबुद्धिपूर्वकस्त्वाम्नायः स्वतन्त्रः पुरुषनिःश्रेयसार्थं प्र-[ 11b ]-वर्त्तते। तस्मान्नैवंविधमनिष्टं विचारमर्हति। किञ्चान्यत्—अविशुद्धित्वानुपपत्तिप्रसङ्गात्। यदि चैतस्मिन्नर्थे भवानपि पर्यनुयुज्येत कथमिदं निश्चीयते यदुत प्राणिनामिष्टशरीरव्यापादनादविशुद्धिर्हिंसेत्यवश्यमभिधानीयं शास्त्रत इति। तदेव च शास्त्रं क्रतौ हिंसामाह। तस्मात् कोऽत्र हेतुरन्यत्र प्रमाणमिहैवैतदप्रमाणं भवितुमर्हति हिंसा धर्म इति। अनुग्रहोपघातलक्षणत्वादहिंसाहिंसयोः प्रत्यक्षसिद्धिरिति चेत्, अथापि स्यादहिंसातश्चानु-

1 Cp. ब्राह्मणे ब्राह्मणमालभते TB. 3. 4. 1.

ग्रहो भवतीष्टशरीराव्यापादनलक्षणो हिंसातश्चापघातो भवत्यभिप्रेतशरीरव्यापादनलक्षणः। क्रियाऽनुरूपञ्च फलमनुमातुं युक्तमिति प्रत्यक्षसिद्धमनयोरिष्टानिष्टफलहेतुत्वम्। तस्मात् कोऽत्र शास्त्रव्यापार इति। एतच्चानुपपन्नम्। कस्मात्? अनिष्टप्रसङ्गात्। एवं हि परिकल्प्यमाने गुरुभार्याऽनुगमनेऽपि सत्त्वान्तरानुग्रहसामर्थ्यादिष्टफलसम्बन्धः स्यात्, माणवकं चोपनीय व्रतादेश-शौच-ब्रह्मचर्य-स्वाध्यायाभ्यास-भैक्षाग्निपरिचरण-गुरुशुश्रूषाऽऽदिप्रवर्त्तयतोऽनिष्टफलसम्बन्धः स्यात्। तस्माल्लोकशास्त्रविरुद्धोऽसत्तर्को नेष्ट इति। उभयाभिधानाच्छास्त्रविरोधप्रसङ्ग इति चेत्, स्यान्मतम्—तदेव शास्त्रमहिंसामाह तदेव हिंसाम्। एवं सति परस्परविरुद्धयोरर्थयोश्चोदितत्वादुभयानुग्रहासम्भवे शास्त्रविरोधप्रसङ्ग इति। तच्च नैवम्। कस्मात्? उत्सर्गापवादयोर्विषयभेदात्। सामान्ये हि शास्त्रे हिंसामुत्सृज्य विशेषे क्रतुलक्षणेऽपवादं शास्ति, सामान्यविहितञ्च विशेषविहितेन बाध्यते। तद् यथा—दधि ब्राह्मणेभ्यो दीयताम्, तक्रं कौण्डिण्यायेति। तस्मादुत्सर्गापवादयोर्विषयभेदात् नास्ति शास्त्रे विरोध इति। किञ्चान्यत्—कन्यागमनात् पुनर्विधाने दोषाभावात्। यथा खल्वपि शास्त्रे प्रतिषिद्धं कन्यागमनमिति नेदानीम्-[ 12a ]-भिरूपः प्रतिगृह्य तामभिगम्याधर्मभाग्भवति, 'गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्विकाम्' इति शास्त्रान्तरसद्भावात्। एवं शास्त्रे प्रतिषिद्धा हिंसा नेदानीं क्रतौ हिंसायां प्रवर्त्तमानोऽनिष्टफलः स्यात् पूर्वोक्तादेव शास्त्रान्तरसद्भावात्। तत्र यदुक्तं प्राणिनामिष्टशरीरव्यापादनादविशुद्धिर्हिंसेत्येतदयुक्तम्। उच्यते—न, अभिप्रायानवबोधात्। चित्रमपि बह्वेतदभिधीयमानं नाभिप्रायं स्पृशति। किं कारणम्? यस्मान्न वयं वेदस्य प्रत्याचक्ष्महे, नो खल्वपि ब्रूमः शास्त्रचोदितायां हिंसायां प्रवर्तमानस्यानिष्टफलसम्बन्धो भवति; किन्तर्हि सति स्वर्गप्राप्तिनिमित्तत्वे वेदविहितस्य कर्मणः समनुष्ठानं प्राणिजमुपघातमन्तरेण न सम्भवतीति हितकामैरप्युपेक्ष्यते। यस्मान्न ह्येतदुक्तं यदन्येषामुपघातेन आत्मानुग्रहः कार्य इति। आह च—

न तत् परस्य सन्दध्यात् प्रतिकूलं यदात्मनः।
एष सङ्क्षेपतो धर्मः कामादन्यः प्रवर्त्तते॥

आह—यद्येतन्नाभ्युपगम्यते कथं पूर्वमुक्तं प्राणिनामिष्टशरीरव्यापादनादविशुद्धिर्हिंसेति। उच्यते—कार्ये कारणोपचारात्। योऽसौ हिंसानिमित्तकः कारुण्यात् मनसि नः परिताप उत्पद्यते सा खल्वविशुद्धिरभिप्रेता। तस्यां कारणमुपचर्योक्तमविशुद्धिर्हिंसेति; यथा मुद्गैस्तर्पैर्गावः सुखिन इति।

आह—कथमेतदवगम्यते हिंसा-कार्यं परितापमात्रमविशुद्धिराचार्यस्याभिप्रेता,



न पुन हिंसैवेति। उच्यते—प्रकर्षप्रत्ययोपलब्धेः। वक्ष्यत्युपरिष्टात् 'तद्विपरीतः श्रेयान्' इति। समानजातीयं चाप्रतियोगिनमपेक्ष्य प्रकर्षप्रत्यय उत्पद्यते। यदि चानुश्रविकस्य प्रशस्यता नाभिप्रेता स्यात् प्रकर्षप्रत्ययानुपपत्तिप्रसङ्गः। तस्मान्नोत्सूत्रमेतत्।

आह—सन्न्यासानुपपत्तिः, अवियोगश्रवणात्। [ 12b ] न हि कर्मणस्त्यागसन्न्यासयोस्त्वमीशिषे; किन्तर्हि शास्त्रं यदाह तदवश्यं कर्तव्यम्। तच्चामरणात् कर्मभिरवियोगं शास्ति। कस्मात्? एवं ह्याह—'जरामर्यमेतत् सत्रं यदग्निहोत्रं दर्शपौर्णमासौ जरया ह एतस्मात् सत्राद्विमुच्यते मृत्युना च। पुनरप्याह—

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः'। (ईश, २)

तस्मादामरणात् कर्मणामत्यागः, तस्मिन् सति हेत्वन्तराणामानन्तर्यम्। उच्यते—न, साधनानामस्वाभाविकत्वात्। पत्नीसंयोगादिभिरनेकैः साधनैरयं कर्मविधिः प्रसाध्यते, तेषां चास्वाभाविकत्वादशक्यमर्जनं नियोगतः पूर्वं कर्त्तुमिति प्रतिपादितम्। तस्मादनित्यानि कर्माणि। हेतु-शास्त्रविप्रतिपत्तौ शास्त्रबलीयस्त्वादिति चेत्—स्यान्मतम्, यत्र हेतु-शास्त्रयोर्विप्रतिपत्तिर्भवति, तत्र विप्रलम्भभूयिष्ठत्वादनुमानस्य बलीयः शास्त्रमित्यवश्यमभ्युपगन्तव्यमिति। तच्चानुपपन्नम्, यस्मात् शक्तितो विनियोगः। शक्तिमपेक्ष्य शास्त्रमग्निहोत्रादीनि कर्माणि विदधत् तेषामनित्यतां ज्ञापयति। कथम्? एवं ह्याह—'योऽलं सन्नग्निहोत्रायाग्निहोत्रं न जुहोति तमेषा देवताऽपरुद्धाऽपरुणद्ध्यस्माल्लोकादमुष्माच्चोभाभ्याम्'। तस्मादनित्यानि कर्माणि। किञ्चान्यत्—शास्त्रहानेः। उभयं हि शास्त्रे दृष्टम्—कर्माणि सन्न्यासश्च। यदि पुनः कर्माणि नित्यकर्तव्यतयेष्यन्ते, तेन सन्न्यासशास्त्रं हीयते। तस्माद्विषयरागाविष्करणमेतद्वः।

आह—न, श्रुतिबलीयस्त्वात्। तुल्यबलयोर्हि शास्त्रयोरेकविषयसन्निपाते द्वयोर्युगपदनुग्रहासम्भवे विकल्पपर्यायौ भवतः। श्रुतिस्मृतिसन्निपाते च श्रुतिर्बलीयसी, स्मृतिविहितश्च सन्न्यासः। तस्मान्नानयोर्विक[ 13a ]ल्पः; नो खल्वपि पर्यायो न्याय्यः। उच्यते—तदितरत्र तुल्यम्। यथैव कर्मणां समनुष्ठानं शास्ति शास्त्रं तथा सन्न्यासमपि। कथम्? एवं ह्याह—

"न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति"॥ (कैवल्योप, ३)

तथा—
कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥

1 Quoted by Śabara with some variants in reading, M. Su. 2. 4. 4.

ब्राह्मणश्चात्र भवति—'तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्च्चिषमभिसम्भवन्त्यर्च्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासांस्तान्। मासेभ्यः संवत्सरं संबत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति (छा, ५।१०)। पुनरप्याह—'एतमेव विदित्वा मुनिर्भवति, एतमेव प्रव्रजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध (स्म वै तत्) पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति, ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति (बृह ; ४ ब्रा.) इति। तस्मादेते त्यागसन्न्यासयोरुभयोर्लिङ्गम्।

आह—यद्यप्येवं शास्त्रं तथाऽपि समनुष्ठाने विधिरस्ति। विहितश्चावश्यं कर्तव्यम्। सन्न्यासे त्वर्थवादमात्रमित्येतयोरयं विशेषः। तस्मिन् सति समनुष्ठानं ज्यायो न त्यागः। उच्यते—कोऽयं विधिः कोऽयमर्थवादः। आह—विधिस्तदर्थेनापूर्वोपदेशः। यो हि विध्यर्थेन लिङा लोटा कृत्यैर्वाऽपूर्वोपदेशः क्रियते स विधिः। यथा—अग्निहोत्रं जुहुयात् स्वर्गकामः, वायव्यं श्वेतमजमालभेत भूतिकाम इति। स्तुतिरर्थवादः। तस्य तु विहितस्य प्ररोचनार्थं या स्तुतिः सोऽर्थवादः। तद् यथा—'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं [13b] भूतिं गमयति' (तै. स, २।१।१) इति। एवंविधां हि स्तुतिमुपश्रुत्य फलार्थिने हि यजमानाय विधिः प्ररोचते, एतस्मिन् हितकामः प्रवर्तत इति। उच्यते—न, अतएव सन्न्याससिद्धिः। एवञ्चेन् मन्यसे यमाम्नायः श्रेयांसमर्थं मन्यते तं प्ररोचनाय स्तौति, तथा सन्न्याससिद्धिः। कस्मात्? स्तुतत्वात्। बहुबलार्थिनां सन्न्यासमाम्नायः स्तौति, स कस्मान्न प्ररोचते। इतरथा ह्यानर्थक्यम्। यदि खल्वप्यर्थवादः स्तुवन्नपि न प्ररोचयेत्। यदुक्तं प्ररोचनार्थोऽर्थवाद इति तद्भवद्भिर्हापितव्यं स्यात्। अनर्थको ह्येवं सति अर्थवादः, न प्ररोचनार्थः। अर्थान्तरवचनं वा। यदि प्ररोचनार्थमर्थवत्त्वमस्य नेष्यते तेन तर्ह्यर्थान्तरं वक्तव्यम्, मा भूदनर्थकत्वं वैदेकदेशस्येति। तस्मात् नानया विभीषिकया वयं शक्याः सन्मार्गादपनेतुम्। किञ्चान्यत्—उभयथा विकल्पेऽनिष्टप्रसङ्गात्। इहायमाम्नायो विधेयत्वेन वा सन्न्यासं स्तूयादविधेयत्वेन वा। किञ्चान्यत्—तद् यदि तावत् विधेयत्वेन स्तौति, किमन्यत् विचार्यते सिद्धः सन्न्यासः। अथाविधेयत्वेन, स्तुतावस्य प्रयोजनं कर्त्तव्यम्। यद्धि कर्त्तव्यतया नेष्टं तदपुरुषबुद्धिपूर्वकः स्वतन्त्रः पुरुषनिःश्रेयसार्थं प्रवर्त्तमान आम्नायः किमिति प्ररोचयेत्। तस्मादेतामपि कल्पनां कृत्वा कृशमेवैतत्। अथवा, उभयथा विकल्प इत्यस्यायमन्योऽर्थः। इहायमाम्नायो भूतार्थेन वा सन्न्यासं प्ररोचयेत्, अभूता-



र्थेन वा? किञ्चातः, तद् यदि तावद्भूतार्थेन प्ररोचयति तथा सत्यमृतत्वप्रापकस्य सन्न्यासपरिग्रहे विषयरागादन्यो हेतुर्वक्तव्यः। अभूतार्थेन पुरुषो निःश्रेयसाद्धीयते। कस्मात्? न ह्येतद् युक्तं यदश्रेयसि मार्गे प्रमाणभूत आम्नायो मातृमोदकन्यायेन हितार्थिनः प्राणिनः प्रतारयेत्, तस्मादयुक्तमेतत्। किञ्चान्यत्—अनेकान्ता [ 14a ]त्। न चायमेकान्तो यद्विहितमेव कर्तव्यम्। तथाच शावराः पठन्ति—"ग्रामगमनं भवतः शोभनमित्यत्रान्तरेण विधिं स्तुतिरेव देवदत्तं ग्रामगमनाय प्ररोचयति" इति। किञ्चान्यत्—आशङ्काप्रसङ्गात्। यदि खल्वपि किञ्चित् सत्यं किञ्चिदनृतं ब्रूयाद्वेदः, तथा सति पौरुषेयवाक्यवद् वेदवाक्येष्वपि आशङ्का प्रसज्यते। तथाच सति यदुक्तमव.... प्रसङ्गः। अनिष्टश्चैतत्, किञ्च विध्यनुमानं वा तदेवमेकदेशभूतत्वात्। अथवा विध्येकदेशोऽर्थवाद इत्यतिसृष्टं भवता, तत्र न्यासेऽर्थवादमुपलभ्य विधिरप्यस्तीति अनुमातव्यम्। अनुपलम्भाददोष इति चेत् — स्याच्चैवं यद्यसौ विधिरुपलभ्यते, तस्मान्नानुपलम्भादयं दोषान्निवर्तिष्यत इति। एतच्चानुपपन्नम्। कस्मात्? अनेकभेदात्। उपलब्धौ यत्नः क्रियताम्। अनेकभेदो हि प्रतिवेदमाम्नायः। तत्र यदुक्तं विधिसद्भावात् क्रियाप्राधान्यमित्येतदप्ययुक्तम्। इतिकर्त्तव्यताऽनुपदेशात् सन्न्यासानुपपत्तिरिति चेत्, अथापि स्यात्, यदि सन्न्यासमप्याम्नायो विधेयं मन्यते, तेन यथा गार्हस्थ्यस्येतिकर्त्तव्यतां भार्योद्वहनादिकां मन्त्रवदुपदिशति तथा सन्न्यासमप्युपदिशेत्, न तूपदिष्टवान्। तस्मान्नास्ति सन्न्यास इति। एतदप्ययुक्तम्। कस्मात्? अभावात्। इतिकर्तव्यतानां हि सर्वासामभावः सन्न्यासः। तत्र किं शास्त्रमुपदेक्ष्यति। यावती खल्वितिकर्तव्यता सन्न्यासाङ्गतामुपदिशति। कथम्, एवं ह्याह—

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः।
सूर्यद्वारेण ते [1]विरजाः प्रयान्ति यत्रामृतः स पुरुषोऽव्ययात्मा ॥ (मु १।२।११)

तत्र तपःश्रद्धे ये ह्युपवसन्तीत्यत्रोपेतं यमनियमलक्षणं धर्ममाह, अरण्य इति गृहेभ्यो विनिःसृतिम्, शान्ता इतीन्द्रियाणामन्तःकरणस्य च विषयाभिला[ 14b ]षाद्विनिवर्तनम्, विद्वांस इति पूर्वरात्रापररात्रादिषु कालेषु निर्विण्णस्य योगिनो ज्ञानाभ्यासम्, भैक्षचर्यां चरन्त इति शरीरस्थितिनिमित्तं परिमितमभ्यवहारनियोगम्। उत्तरार्द्धेन च फलमाचष्टे, तन्निबन्धनश्च विस्तरः सन्न्यासेतिकर्त्तव्यतायां मन्वादिभिरभिहितः। श्रुतिनिर्वचनाच्च स्मृतयो भवतां प्रमाणमिति पक्षः। तत्र यदुक्तमितिकर्त्तव्यताऽनुपदेशात् नास्ति सन्न्यास इत्येतदयुक्तम्। एवञ्च न नित्यानि कर्माणि। यत्तु

1 The Ms. reads रजसः instead of विरजाः.

अनेनैतदुक्तमानुश्रविको हेतुरनैकान्तिक इति सत्यमेतत्। अवश्यं हि कर्मणः फलमभ्युपगन्तव्यम्। इतरथा हि तन्निमित्तस्य संसारस्याभावादनिष्टप्रसङ्गः। तस्मादनिष्टमेवैतदाचार्यस्य। आह, कथमेतदनुमातव्यमिति। उच्यते—क्षयग्रहण-सामर्थ्यात्। यदि पूर्वसूत्रोक्तमिहानुवर्त्तते क्षयग्रहणमनर्थकं स्यात्। कस्मात् ? अत्यन्ताभावपर्यायो हि क्षय इति कृत्वा। एवं सिद्धोऽविशुद्धियोगः। आह—क्षययोग इदानीं कथमनुमातव्य इति। उच्यते—क्षययोगोऽङ्गपरिमाणात्। क्षययोगः पुनरप्यहेतुः पुनरङ्गपरिमाणाद्वेदितव्यः। यानि हि यजेरङ्गानि पशुपुरोडाशादीनि तानि परिमितानि। परिमितानां साधनानां तन्त्वादीनां परिमितं कार्यं पटादि दृष्टम्, परिमितं क्षयधर्मि दृष्टं तद्वदेव। किञ्चान्यत् संसारोपलम्भात्। दृश्यते चायं वाग्बुद्धि-स्वभावाहारविहारभेदभिन्नकर्मविहारवैचित्र्यनिमित्तः संसारः। यदि पुनः साक्षात्कृतं कर्माक्षयफलं स्यात् स पुनरावृत्त्यभावात् प्राणिनां नोपलभ्येत। शब्दसामर्थ्यान्नित्यत्वमिति चेत्, स्यादेतत् शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्। स चास्य हेतोरमृतत्वमाह—'तरति मृत्युं तरति पाप्मानम्' इत्यादि। तस्मादनिच्छताऽप्येतदवश्यमभ्युपगन्तव्यम्, अनभ्युपगमे वा प्रतिज्ञाहानिर्वेदः प्रमा [15a]णमिति। एतच्च नैवं। कस्मात् ? शब्दान्तरेण विरोधात्। अनित्यत्वमस्य हेतोः शब्दोऽनुमन्यते, तस्यैवं सति विरोधः प्राप्नोति। कथम्, एवं ह्याह—[1]"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, अथैतमेवाध्वानं पुनर्निवर्त्तन्ते, यथेतमाकाशमाकाशाद्वायुं ते धूममभिसम्भवन्ति धूमो भूत्वाऽभ्रं भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते। ततो वै यो तमत्ति यो रेतः सिञ्चति स भूय एव भवति' इति। तत्र यदुक्तं शब्दसामर्थ्यान्नित्यत्वमित्येतदयुक्तम्। उभयाभिधानात् शास्त्रविरोधप्रसङ्ग इति चेत्, स्यान्मतम्—तदेव शास्त्रं नित्यत्वमाह तदेवानित्यत्वम्। एवं सति परस्परविरोधिनोरर्थयोश्चोदितत्वादुभयानुग्रहासम्भवे सति शास्त्रविरोधप्रसङ्ग इति। तच्च नैवम्। कस्मात् ? असम्भवे सति अर्थान्तरक्लृप्तेः। यदि हि प्रमाणभूता श्रुतिरसम्भविनमर्थं चोदयति तत्रार्थान्तरं कल्पयति, तद् यथा—'स आत्मनो वपामुदखिदत्', 'स्तेनं मनः अनृतवादिनी वाक्' इत्येवमादिषु एवमिहापि नास्ति सम्भवः ; यदेकोऽर्थो नित्यश्च स्यादनित्यश्चेति। तस्मान्नित्यत्ववाचकस्य शास्त्रान्तरस्य भक्त्याऽर्थान्तरं परिकल्पयिष्यामः। तद्वदितरत्रापीति चेत्, स्यान्मतम्—यथैव भवता नित्यानित्ययोरेकत्रासम्भवात् नित्यत्वस्य भक्त्या कल्पना कृता, तथैवानित्यत्वस्यापि करिष्यत इति। एतच्चायुक्तम्। कस्मात् ? सर्व-

1 Cf. Chhāndogya, 5. 10. 3-6.



प्रमाणविरोधप्रसङ्गात्। विनाशे भक्त्या कल्प्यमाने सर्वप्रमाणविरोधः प्रसज्येत। कथम् ? प्रत्यक्षविरोधस्तावत् संसारोपलम्भात्, अनुमानविरोधः—अङ्गपरिमाणे सत्यङ्गिनो नित्यत्वानुपपत्तेः, शब्दविरोधः—ते धूममभिसम्भवन्तीति वचनात् ; न तु नित्यत्वे भक्त्या कल्प्यमाने दोषोऽयमुपपद्यते। तस्माद्विषममेतत्।

आह—कथमिदानीं[15b] भक्त्या कल्पयितव्यं शास्त्रमिति ? उच्यते—प्रकृष्टार्थतया यथा खल्वप्यमृतं वा मृतमतिजीवो मा ते हानिपुरसवः (?) शरीरमित्यभिधीयते, न च प्राणिनामत्यन्तायासवो जहति, किन्तर्हि प्रकृष्टं कालमेवमिहाप्युच्यते—'तरति मृत्यु'मिति नात्यन्ताय मृत्युं तरति, किन्तर्हि प्रकृष्टं कालम्। उपचर्यते हि लोके प्रकृष्टे नित्यशब्दः ; तद् यथा नित्यप्रहसितो नित्यप्रजल्पित इति। एवं सिद्धः क्षययोगः।

आह—अतिशययोग इदानीमस्य हेतोः कथमनुमातव्य इति। उच्यते—अतिशययोगः क्रियाऽभ्यासात्। यत्र हि क्रिया सकृत् प्रवर्तते यत्र चासकृदावर्तते तत्रातिशयो दृष्टः। तद् यथा—कृष्यादिषु। यज्ञे च द्रव्योपादानशक्त्यपेक्षा, क्वचित् सकृदेव प्रवृत्तिः, क्वचित् पुनःपुनरावृत्तिः ; तस्मादतिशयेन भवितव्यम्। किञ्चान्यत्—अङ्गातिशयात्। इहाङ्गानामतिशयादङ्गिनोऽपि घटादेरतिशयो दृष्टः, अस्ति चायं प्रतियज्ञमङ्गानां दक्षिणादीनामतिशयः। तस्मादत्राप्यतिशयेन भवितव्यम्। देवताऽङ्गभावगमनात् क्षयातिशयानुपपत्तिरिति चेत्, अथापि स्यात्—यो हि यज्ञे द्रव्यमात्रस्य साधनभावमनुमन्यते तं प्रति क्षयातिशययोगावपरिहार्यौ स्याताम्। वयं तु द्रव्यसमवायिनीं देवतां क्रतावङ्गभावमुपगच्छन्तीं विद्मः ; तस्माददोषोऽयमिति। तच्चानुपपन्नम्। कस्मात् ? साध्यत्वात्। देवतानामपरिमितत्वं साध्यं तदङ्गभावगमनाच्च दोषाभावः। न चात्मा क्रियाङ्गमुदासीनत्वादिति नः सिद्धान्तः। तस्माद्युक्तमेतत्। उपेत्य वा—क्रतुसमनुष्ठानानर्थक्यप्रसङ्गात्। यदि द्रव्यसमवायिनीं देवतामुपलभ्य तदाऽङ्गभावगमनादक्षयो निरतिशयश्च हेतुरवगम्यत इतीष्टं वः, तेन तर्हि यद्वा तद्वा वेदोक्तं कर्म कृत्वा शक्योऽवाप्तुम[16a]र्थः, किं प्राणिविनाशहेतुभिः क्रतुभिः। कथम् ? न हि किञ्चित् कर्म विद्यते यत्र शरीरस्याङ्गभावो न स्यात्। सर्वदेवतामयं शरीरम्। यस्मादाह—तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते, सर्वा ह्यस्मिन् देवता शरीरेऽधिसमाहिताः। तत्र यदुक्तं देवताङ्गभावगमनात् क्षयातिशयानुपपत्तिरित्येतदयुक्तम्। एवमयं हेतुस्त्रिदोषः, तेन यः फलविशेषोऽभिनिर्वर्त्यते सोऽपि तथाजातीय इति शक्यमनुमातुम्। तस्मान्नास्य जिज्ञासोरत्र समाधिः।

आह—यदि नायं श्रेयानिति कृत्वाऽस्य जिज्ञासोर्नात्र समाधिस्तेन तर्हि यः

श्रेयान् फलविशेषः स उपदेष्टव्य इत्युच्यते—**तद्विपरीतः श्रेयान्** । तदित्यनेन कर्मविधिनिष्पादितस्य स्वर्गप्राप्तिलक्षणस्य फलस्याभिसम्बन्धः, तस्माद्विपरीतः शुद्धोऽक्षयो निरतिशय इत्यर्थः। कोऽसावित्युच्यते—मोक्षः श्रेयान्। एतदुक्तं भवति—उभावप्येतौ प्रशस्यौ स्वर्गापवर्गावाम्नायविहितत्वात्, मोक्षस्तु प्रशस्यतरः। कस्मात्? यथोक्तदोषानुपपत्तेः। स ह्यवश्यं भावितत्वादैकान्तिकः, अतीन्द्रियत्वादसंवेद्यः, स्वात्मन्यवस्थितत्वाल्लघुः सर्वत्र सन्निहितश्च। आम्नायस्तु तत्त्वात् प्रशस्तः, सद्भिरासेवितत्वादनिन्दितः, यम-नियम-वैराग्य-ज्ञानाद्युपायशुद्धेर्विशुद्धः, अद्रव्यत्वादक्षयो निरतिशयश्च।

आह—कथं पुनरयमपवर्गः प्राप्यत इति। उच्यते—संयोगाभावात्। दुःखञ्च प्रधानम्। तथा च तन्त्रान्तरेष्वप्युक्तम्, 'दुःखहेतुः कार्यकरणशक्तिः' इति। तेन यदा पुरुषस्य संयोगस्तदाऽविशुद्धित्वमस्य स्वशक्तिविशेषयोगात् तेषु तेषु जात्यन्तरपरिवर्तेषु धर्मादिनिमित्तसामर्थ्यादायासमनुभवति। यदा तु प्रधानसंयोगो विनिवर्तते तदा निमित्ताभावे नै[ 16b ]मित्तिकस्याप्यभाव इति कृत्वा न पुनर्द्वन्द्वान्यनुभवति।

आह—किमर्थः पुनरयं प्रधानस्य पुरुषेण सह संयोगः। उच्यते—नैतदिहाभिधानीयम्। वक्ष्यत्ययमुपरिष्टादाचार्यः—'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगः' (का, २१) इति।

आह—वियोगस्तर्हि कस्मान्निमित्ताद् भवतीति। उच्यते—**व्यक्ताव्यक्तज्ञविज्ञानात्**। व्यक्तञ्चाव्यक्तञ्च ज्ञश्च—व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं व्यक्ताव्यक्तज्ञविज्ञानं तस्मात्। बहुष्वनियमादल्पाचोऽपि न पूर्वनिपातः। अथवा ज्ञानस्य साधकतमं व्यक्तं तत्पूर्वकत्वादव्यक्तसमधिगमस्येत्यभिहितम्। यद्वा व्यक्तञ्च अव्यक्तञ्च ते व्यक्ताव्यक्ते, ते विजानातीति व्यक्ताव्यक्तज्ञः—तद्विज्ञानात् संयोगो निवर्तते। वक्ष्यति चैतत्—

'दृष्टा मयेत्युपेक्षत एको दृष्टाऽहमित्युपरमत्यन्या' (का, ६६) इति।

तत्र रूपप्रवृत्तिफललक्षणं व्यक्तम्। रूपं पुनर्महानहङ्कारः, पञ्चतन्मात्राण्येकादशेन्द्रियाणि, पञ्चमहाभूतानि। सामान्यतः प्रवृत्तिर्द्विविधा—हितकामप्रयोजना च, अहितप्रतिषेधप्रयोजना च। विशेषतः पञ्च कर्मयोनयो वृत्त्याद्याः प्राणाद्याश्च पञ्च वायवः। फलं द्विविधम्—दृष्टमदृष्टञ्च। तत्र दृष्टम्—सिद्धि-तुष्ट्यशक्ति-विपर्ययलक्षणम्, अदृष्टम्—ब्रह्मादौ स्तम्बपर्यन्ते संसारे कर्मप्रतिलम्भ इत्येतद् व्यक्तम्। एषां गुणानां सत्वरजस्तमसामङ्गाङ्गिभावगमनाद्विशेषगृहीतिः। यदा त्वङ्गभावमगच्छन्तो निर्लिखितविशेषा



व्यवतिष्ठन्ते तदाऽव्यक्तमित्युच्यते। चेतनाशक्तिरूपत्वात् चित्रं गुणवृत्तं जानातीति ज्ञः। एषां त्रयाणां भेदमभेदञ्च विज्ञाय संयोगनिवृत्तिं लभते। कस्मात्? संयोगनिवृत्तिप्रतिद्वन्द्विभूतत्वाद् वियोगनिमित्तस्येह यदा[1]ऽदर्शननिमित्तः प्रधानपुरुषयोः संयोगः तस्मा[ 17a ]दस्य प्रतिद्वन्द्विभूतेन ज्ञानेन वियोगहेतुना भवितव्यम्। को दृष्टान्तः? तमःप्रकाशवत्। यथा तमसा तिरोहितानि द्रव्यानि घटादीनि नोपलभ्यन्ते तत्प्रतिद्वन्द्विभूतेन तु प्रकाशितानामुपलब्धि र्भवति, तद्वदिहापि द्रष्टव्यमिति सिद्धं ज्ञानान्मोक्षः। उक्तञ्च—

वृक्षाग्राच्च्युतपादो यद्वदनिच्छन्नरः पतत्येव।
तद्वद् गुणपुरुषज्ञोऽनिच्छन्नपि केवली भवति॥

किञ्चान्यत्—आम्नायाभिहितत्वात्। आम्नायनिबन्धनो ह्ययमर्थो ज्ञानान्मोक्ष इति, न यादृच्छिकः। कथम्? एवं ह्याह—

'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्।
सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'॥ (तै, २।१)

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन'॥ (तै, २।४१)

[2]'तमेव विदित्वाऽमृतत्वमेति नान्यः पन्था अयनाय विद्यते'। (श्वेताश्व, ३।८) तथा ब्राह्मणेऽप्युक्तम्—'तरति शोकमात्मवित्' (छा, ७।१।३), 'ब्रह्मविद् ब्रह्मैव भवति' इति। तस्मादाम्नायप्रामाण्यादपि मन्यामहे ज्ञानान्मोक्ष इति।

आह—ज्ञानवाचिनोऽमृतत्वनिमित्ताभ्युपगमान्महत आम्नायान्तरस्यानर्थक्यं प्राप्तम्। किं कारणम्? न ह्यनायासेनेष्टावाप्तौ सत्यामायासभूयिष्ठे कर्मणि प्रवर्तमानः कृती भवतीति। आह च—

---

1 Cf. दर्शनकार्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तम्, दर्शनमदर्शनस्य प्रतिद्वन्द्वीति अदर्शनं संयोगनिमित्तमुक्तम्। नात्र दर्शनं मोक्षकारणम्। अदर्शनाभावादेव बन्धाभावः, स मोक्ष इति। दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनज्ञानं कैवल्यकारणमुक्तम्, Yoga-sūtra Bhāṣya, 2. 23.

Vātsyāyana also refers to अदर्शन in his Bhāṣya on NS. 3. 2. 68.

2 The usual reading is :—तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय.

¹अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥

यदि पुनः कर्माण्यत्यन्तकर्तव्यतयेष्यन्ते ज्ञानवाचिन आम्नायस्य कथमर्थवत्ता सिद्धा भवति । आह—समुच्चये तूभयार्थवत्त्वम् । ज्ञानकर्मणोस्तु समुच्चयेऽभ्युपगम्यमाने द्वयोरप्याम्नायार्थवत्ता सिद्धा भवति—विद्वान् यजेत, विद्वान् याजयेदिति वचनात् । तथा सर्वपुरुषाणां क्रतावधिकारः, अश्रोत्रिय-षण्ढ-शूद्रवर्जमिति न्यायात् । तस्मात् ज्ञानकर्मणोः समुच्चयादिष्टप्रसि[ 17b ]द्धिः । उच्यते—न, पूर्वदोषापरिहारात् । यदि नियमतो विदुषैव कर्माणि कर्तव्यानीत्यभ्युपगम्यते, तेन यः पूर्वोक्तो दोषः संसाराभावप्रसङ्गः तस्यापरिहारः । किञ्च शास्त्रहानेश्च । यच्च शास्त्रमिष्टापूर्ते समुपास्यते ते धूममभिसम्भवन्तीति, तदेतस्यां कल्पनायां हीयते । किञ्चान्यत्—भिन्नफलत्वात् । इहाभिन्नफलानि द्रव्याणि समुच्चीयन्ते । तद् यथा—भुज्यङ्गानि सूपादीनि, अभिन्नं तेषां तृप्तिलक्षणं फलमिति । न चैतज्ज्ञानकर्मणोरभिन्नं फलं स्वर्गापवर्गहेतुत्वात् । ज्ञानसामर्थ्यात् कैवल्यमभिन्नं फलमिति चेत्—पूर्वेणाविशेषः । यदुक्तं संसाराभावप्रसङ्ग इति तदनपहृतमेव भवति । किञ्चान्यत्—श्रूयमाणफलविरोधश्च । यच्च क्रियायाः फलं श्रूयते—'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'राष्ट्रमग्निष्टोमेन जयति' इति तद्विरुध्यते । कर्मणश्च शेषभावः स्वार्थोपसर्जनत्वे सत्यर्थान्तरनिष्पादकत्वात् । यथा वहन्तीत्येवमाद्याः क्रियाः स्वं फलमुपसर्जनीकृत्य तद्द्वारेण यजेरुपकुर्वन्त्य स्तच्छेषभूता भवन्ति, एवं क्रियाऽपि ज्ञानफलभूतत्वात् तच्छेषभूता स्यात् । विधिसद्भावात् क्रियाप्राधान्यमिति चेत्—न, उक्तत्वात् । कथमेतत् ? नास्ति विधिकृतो विशेषः, उपेत्य वा तत्रापि तदुत्पत्तेः । अस्ति हि ज्ञानस्यापि विधायकं शास्त्रम् । कथम् ? एवं ह्याह—²य आत्माऽपहतपाप्मा विजिघत्सो विपिपासो विजरो विमृत्युर्विशोकः सन्न्यस्तसङ्कल्पः सोऽन्वेष्टव्यः स जिज्ञासितव्यः सर्वांश्च कामानवाप्नोति य आत्मानमनुविद्य विजानातीति प्रजापतेर्वचनं श्रूयते । पुनरप्याह—³'द्वे विद्ये वेदितव्ये परा चैवापरा च या' । तस्मात् विधिसद्भावात् क्रियाप्राधान्यमिति स्वपक्षानुरागमात्रमेतद् दृष्टार्थत्वादि त्ये के । एके

1 Quoted also by Śabarasvāmin in his Bhāṣya on M. Su. 1. 2. 4.
Cf. also Jaya on Kā. 57—
'मध्वर्थं प्रस्थितः कश्चिद् ग्रामाभ्यासे तु माचिकम् ।
अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' ॥

2 Cf. Chhāndogya, 8. 7. 1

3 Cf. Muṇḍaka, 1. 1. 4.



पुनराचार्या मन्यन्ते दृष्टमेव ज्ञानस्याज्ञाननिवृत्तिलक्षणं फलम् । तस्मान्न शास्त्रेण विधीयते । किं कारणम् ? [ 18a ] दृष्टार्थस्य हि कर्मणो न शास्त्रं प्रयोजकं स्वयमेवार्थितत्वात् तत्र प्रवृत्ते र्भोज्यादिवत्, तेषां ज्ञानविधायकानि वाक्यानि तान्युपायगुणविधानार्थमनुवादभूतान्याश्रीयन्ते । तद् यथा—दध्ना जुहोति, पयसा जुहोतीति खल्विदमुच्यते विद्वान् यजेत विद्वान् याजयेत् श्रोत्रियस्य च कर्मण्यधिकार इति । तस्यायमर्थः—अधीत्य वेदं क्रियाऽऽनुपूर्वीञ्च ज्ञात्वा कर्मणि प्रवर्तयितव्यम् । एवञ्च सति न कश्चिद् दोषः । यदि पुनर्नियमत एवात्मविदां कर्मण्यधिकार स्तेन संसारप्रसङ्गः स्वाभाविकत्वाद्विज्ञानस्य शास्त्रस्य सर्वाधिकारविरोधः । तस्मान्नास्ति समुच्चयो ज्ञानकर्मणोः । अ प र आह—सत्यं नास्त्यनयोः समुच्चयः, किन्तर्हि सर्वार्थक्रियाज्ञानं प्रतिषिद्धार्थम् । ये हि षण्ढान्धबधिरादयः कर्मणोऽत्यन्तं निराकृता स्तेषां ज्ञानादाश्रमान्तरेऽमृतत्वावाप्तिः, इतरेषान्तु मूलाश्रमे कर्मण एवेति । तस्य वाऽयं वादिनः परिहार इति । उच्यते—न, स्वसमयविरोधात् । एवं ब्रुवाणस्यात्मवादिनः स्वसमय एव विरुध्यते । यदुक्तं 'विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामः', अथ यदुक्तम्—'पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थाय भैक्षचर्यं चरन्ती'ति, न च षण्ढानां पुत्रैषणाव्युत्थानमर्थवद्भवति दैवकृतत्वात् । किञ्चान्यत्—रहस्यभूतत्वात् । रहस्यभूतं हि वेदानां ज्ञानम् । यस्मादाह—¹'तद्ध स्मैतदारुणिरौद्दालकिर्ज्येष्ठाय पुत्राय प्रोवाच । इदं ज्येष्ठपुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्याय वाऽन्तेवासिने नान्यस्मै यस्मै कस्मै च न । य इमामद्भिः परिगृहीतां वसुना वसुमतीं पूर्णां दद्यादेतदेव ततो भूय इति । भवति चात्र परं रहस्यं वेदानामवसानेषु पठ्यते—

पण्डाद्यर्थं तदिष्टञ्चेद् दिष्ट्या सफलता श्रुतेः ।
विद्वान् कर्माणि कुर्वीतेत्येतदुक्तं किल श्रुतौ ॥ १ ॥

स च पण्डादि[ 18b ]रेव स्याद् योऽत्यन्तं कर्मणश्च्युतः ।
स एव वर्त्यतां प्राज्ञैः किं न्यायोऽथ मतिभ्रमः ॥ २ ॥

इन्द्रियार्थानुरागो वा द्वेषो वा मोक्षवर्त्मनि ।
कैवल्यप्राप्तिहेतुत्वाद् या वेदविहिता स्तुता ॥ ३ ॥

प्रशस्ता याज्ञवल्क्याद्यै र्विशिष्टै स्तत्त्वनिश्चयात् ।

सेयं विषयरागान्धै र्विपरीतार्थवादिभिः ।
विद्या कन्येव पण्डाय दीयमाना न शोभते ॥ ४ ॥

1 Cf. Chhāndogya, 3. 11. 4-6.

तस्माद् रागानुगैरुक्तां कुहेतुसृजनामिमाम् ।
अपोह्य मतिमान् युक्त्या ह्याश्रमादा[1]श्रमं व्रजेत् ॥ ५ ॥

इति श्रीमदाचार्येश्वरकृष्ण-विरचितायां सांख्यसप्ततौ युक्तिदीपिकानाम्नि विवरणे प्रथममाह्निकम् ।

1 The Ms. reads ह्याश्रमादश्रमं व्रजेत्.

आह—सम्यगुपदिष्टं भवता, व्यक्ताव्यक्त-ज्ञ-विज्ञानान्मोक्षोऽवाप्यते । इदानीमुपदेष्टव्यं कथमेतत् त्रयं प्रतिपत्तव्यमिति । उच्यते—त्रयस्यास्य प्रतिपत्तिं द्वेधा समामनन्ति—समासतो विस्तरतश्च । तदेव त्रयं पञ्चभिरधिकरणै र्भिद्यते । कानि पुनरधिकरणानीत्युच्यन्ते—प्रकृतिविकारवृत्तम्, कार्यकारणवृत्तम्, अतिशयानतिशयवृत्तम्, निमित्तनैमित्तिकवृत्तम्, विषयविषयिवृत्तमिति । तत्र प्रकृतिविकारवृत्तपूर्वकत्वादितरेषामधिकरणानां तद्भेदान् वक्ष्यामः । तत् पुनश्चतुर्द्धा भिद्यते । किञ्चित् कारणमेव न कार्यम्, किञ्चित् कारणं कार्यञ्च, किञ्चित् कार्यमेव न कारणम्, किञ्चिन्नैव कारणं न चापि कार्यमिति ।

आह—सामान्योद्दिष्टमेतन्नास्माकं बुद्धाववतिष्ठते, तस्माद् विशिष्योपदिश्यतां कस्य पदार्थस्य किं वृत्तमिति, उच्यते—बाढमुपदिश्यते ।

[ मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडषकस्तु विकारो न प्रकृति र्न विकृतिः पुरुषः ॥ ३ ॥ ]

**मूलप्रकृतिरविकृतिः**—मूलमाधारः प्रतिष्ठेयम्, अर्थान्तरं प्रकरोतीति प्रकृतिः, मूलञ्चासौ प्रकृतिर्मूलप्रकृतिः । मूलप्रकृतिः कस्य मूलम्—महदादीनाम् । संज्ञा खल्वियं प्रधानस्य मूलप्रकृतिरिति । सा चाविकृतिरविकारानुत्पाद्येत्यर्थः ।

आह - समासानुप[ 19a ]पत्तिः, विशेषणान्तरोपादानात् । मूलमित्ययं शब्दः प्रकृतिविशेषणार्थमुपात्तो महदादिविशेषणान्तरमुपादत्ते । तत्र सविशेषणानां वृत्तिर्नेति समासप्रतिषेधः प्राप्नोति । समासान्तरविधानाददोष इति चेत्, स्यान्मतम्—यद्येतस्मिन् समासे दोषोऽयमुपपद्यते समासान्तरमत्र विधास्यते, मूलं प्रकृतीनां मूलप्रकृतिरिति । एतच्चानुपपन्नम् । कस्मात्—दोषान्तरोपपत्तेः । एवमप्युपसर्जनं पूर्वं निपततीति षष्ठ्योक्तस्योपसर्जनत्वात् पूर्वनिपातः । तत्रैवं भवितव्यं मूलं प्रकृतीनां प्रकृतिमूलमिति । तस्मादिदमप्यसारमिति । उच्यते—पूर्व एव समासोऽस्तु । यत्तक्तं विशेषणान्तरोपादानात् समासानुपपत्तिरिति, तत्र ब्रूमः—सम्बन्धिशब्दानां सम्बन्ध्यन्तरमनपेक्ष्य स्वरूप-प्रतिलम्भ एव नास्तीत्याकाङ्क्षावत एव वृत्त्या भवितव्यम् । तद् यथा देवदत्तस्य

गुरुकुलमिति सम्बन्धिशब्दत्वाद् देवदत्तशब्दमपेक्षमाणोऽपि गुरुशब्दः कुलशब्देन सह वृत्तिं प्रतिपद्यते। एवमिहापि मूलमित्ययं शब्दः सम्बन्धिशब्दत्वान्महदाद्यपेक्षोऽपि प्रकृतिशब्देन सह वृत्तिं प्रतिपद्यत इति। किञ्चान्यत्—वाक्यप्रतिपाद्यस्यार्थस्य वृत्त्या उपलब्धेः। यत्र हि वाक्यप्रतिपाद्योऽर्थो वृत्त्या न गम्यते, यथा ऋद्धस्य राज्ञः पुरुष इति, तत्र सविशेषणानां वृत्तिर्नेति व्यवस्थितं शास्त्रे। गम्यते चेह वाक्यप्रतिपाद्योऽर्थो वृत्तौ सत्यां तस्माददोषोऽयमिति। किञ्च—ज्ञापकात्। ज्ञापकं खल्वपि 'कर्मवत् कर्मणा तुल्यक्रियः' [ पा, ३।१।८७ ]। तथा, 'अकारस्य विवृतोपदेश' इत्यादि। तस्मान्नात्रासूया कर्तव्येति।

आह – अवयवस्य प्रत्यवमर्शानुपपत्तिः संज्ञाशब्दत्वात्। संज्ञाशब्देषु हि नावयवस्य परामर्शो भवति। तद् यथा—गजकर्णोऽश्वकर्णः। कस्य गजस्य कस्याश्व- [ 19b ]स्येत्युच्यते—न, अर्थोपपत्तेः। यत्र ह्यर्थ उपपद्यते भवत्येव तत्र संज्ञाशब्देष्ववयवेष्वपरामर्शः। तद् यथा—सप्त पर्णान्यस्य पर्वणि पर्वणि, अष्टौ पदान्यस्य पङ्क्तौ पङ्क्तौ सप्तपर्णोऽष्टापदमिति। उपपद्यते चेहायमर्थः। तस्माददोषोऽयम्।

आह—मूलप्रकृतिरविकृतिः—प्रकृतिरिति वक्तव्यम्। यदाह महदाद्याः प्रकृतिविकृतयः सप्तेति। उच्यते—प्रकृतित्वावचनम्। प्रकृतित्वञ्च मूलप्रकृते र्न वक्तव्यम्। किं कारणम्—अर्थोपपत्तेः। मूलप्रकृतिरविकृतिरित्येव सिद्धिः, सूच्यमानं हि तदनर्थकं स्यात्।

आह—प्रकृतित्वानुपपत्तिः सत्कार्यवादाभ्युपगमात्। प्रकरोतीति प्रकृतिः, तद्भावः प्रकृतित्वम्। तच्च सति कार्ये न घटते। कस्मात्—न हि सतामात्मादीनां करणमुपपद्यत इति। उच्यते—तदितरत्रापि तुल्यम्, यथैव हि सतामात्मादीनां करणं नोपपन्नमेवमसतां शशविषाणादीनामपीति नास्ति कश्चिद् विशेषः। तृतीया तु विवादावस्थैव कोटिः। एवमुभयपक्षव्युदासात् स्वपक्षसिद्धिरिति चेत्, तथाऽपि स्यात् सदसतोः क्रियासम्बन्धं प्रत्यविशेष उपदर्श्यते भवता तेनोभयोरपि पक्षयो र्व्युदासः कृतो भवति। न चोभयपक्षव्युदासात् स्वपक्षसिद्धिरिति, एतच्चायुक्तम्। कस्मात्—उत्तरत्र प्रतिषेधात्। स खल्वेष वादी सत्कार्यवादं प्रत्याचष्टे, तस्मात् स्वक एवैनमधिकारे निवर्तयिष्यामः।

आह—अविकृत्यभिधानानर्थक्यम्, मूलप्रकृतित्वात् तत्सिद्धिः। या हि मूलं सर्वासां प्रकृतीनाम्, अविकृत्यैव तया भवितव्यम्। इतरथा हि मूलप्रकृतित्वानुपपत्तिः। यदि खल्वपि प्रधानस्यापि प्रकृत्यन्तरं स्यात्, मूलप्रकृतित्वं नोपपन्नं भवेत्। तस्मान्मूलप्रकृतित्ववचनादेव तत्सिद्धेरविकृतिग्रहणमनर्थ[ 20a ]कमिति। उच्यते—न,



अनवस्थाप्रसङ्गनिवृत्त्यर्थत्वात्। यथा हि मूलादीनां बीजं प्रकृतिस्तस्याप्यन्यत् तस्याप्यन्यदित्यनवस्था। एवं महदादीनां प्रधानं मूलप्रकृतिः, तस्याप्यन्यदित्यनवस्था प्रसज्येत, सा मा भूदिति। अतस्तन्निवृत्त्यर्थं तदभिधानम्।

आह—न, हेत्वनुपदेशादसंशयमेतदेव स्यात्, न तु हेतुरत्रोपदिष्टो भवद्भिः। न चानुपदिष्टहेतुकं विपश्चिद्भिः प्रतिपत्तुं न्याय्यम्। तस्मादयुक्तमेतत्। उच्यते—कारणान्तरप्रतिषेधात्। पुरुषाकर्तृत्वात् प्रधानाख्यानां गुणानां चावस्थान्तरानुपपत्तेरविकृतत्वसिद्धिः। इहारभ्यमाणा प्रकृतिः कारणान्तरैरीश्वरादिभिरारभ्यते, पुरुषेण वा, गुणैर्वा। किञ्चातः—तन्न तावत् कारणान्तरैरीश्वरादिभिरारभ्यते। कस्मात्—प्रतिषेधात्। यथा कारणान्तराणि न सन्ति तथोत्तरत्र प्रतिषेधः करिष्यते। इदानीं सत्त्वं रजस्तमः पुरुष इति पदार्थचतुष्टयं प्रतिज्ञायते। तत्रापि पुरुषकर्तृत्वं प्रत्याख्यायते। तस्मिन् प्रत्याख्याते गुणानामेवावस्थान्तरापेक्षः कार्यकारणभावः। सूक्ष्माणां मूर्तिलाभः कार्यम्। निवृत्तविशेषाणामविभागात्मनाऽवस्थानं कारणमित्ययं सिद्धान्तः। तत्रास्तंगतविशेषाणां निवृत्तपरिणामव्यापाराणामङ्गाङ्गिभावमनुपगच्छतामुपसंहृतशक्तीनां सर्वविकारसाम्यं सर्वशक्तिप्रलयं [1]निःसत्तासत्तं निःसदसदव्यक्तलक्षणमवस्थान्तरमुपसम्प्राप्तानां नास्त्यन्यत् सूक्ष्मतरमवस्थान्तरम्, यस्येदंलक्षणमवस्थाऽन्तरं कार्यं स्यात्। तस्मात् सुष्ठूच्यते मूलप्रकृतिरविकृतिरिति। **महदाद्याः प्रकृतिविकृतयः सप्त।** महानाद्यो यासां ता महदाद्याः। अवयवेन विग्रहः, समुदायः समासार्थः। अन्यथा महानेवात्रापरिगृहीतः स्यात्। प्रकृतयश्च विकृतय[ 20b ]श्च प्रकृतिविकृतयः, कारणानि कार्याणि चेत्यर्थः। तत्र महानहङ्कारस्य प्रकृतिः प्रधानस्य विकृतिः। अहङ्कारोऽपि तन्मात्रेन्द्रियपर्वणोः प्रकृतिः, विकृतिर्महतः।

आह—सप्तग्रहणं किमर्थम्। उच्यते—सप्तग्रहणमवधिपरिच्छेदार्थम्। अक्रियमाणे हि सप्तग्रहणे न ज्ञायते कियान् प्रकृतिगणः प्रकृतिविकृतिसंज्ञो भवति। तत्र महाभूतेन्द्रियपर्वणोरपि प्रकृतित्वं प्रसज्येत।

आह—नैतदस्ति प्रयोजनं परिशेषसिद्धेः। इह भवतां पञ्चशिखानां पञ्चविंशतितत्त्वानि। तत्र मूलप्रकृतिरविकृतिरित्युक्तम्, षोडशकस्तु विकारो न प्रकृति र्न विकृतिः पुरुष इति वक्ष्यति। परिशेषतः सप्तैवावशिष्यन्ते। तस्मान्नार्थस्तदर्थेन

1 Cf. प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत् तन्निःसत्तासत्तं निःसदसत् निरसदमव्यक्तमलिङ्गं प्रधानं प्रतीयन्तीति, Yoga-sūtra Bhāṣya, 2. 18.

सप्तग्रहणेन। उच्यते—अहङ्कारपरिग्रहार्थम्। एवं तर्हि नैवाहङ्कारो विद्यत इति 'पतञ्जलिः[1], महतोऽस्मिप्रत्ययरूपत्वाभ्युपगमात्। तत्परिहारार्थमेतद् भविष्यति।

आह—न, उत्तरत्र परिग्रहात्। एतदपि नास्ति प्रयोजनम्। वक्ष्यति हि महता कण्ठेनोपरिष्टादाचार्यः—"प्रकृतेर्महांस्ततोऽहङ्कारः" [ का, २२ ] इति। तेनैवेदं सिद्धम् नार्थस्तदर्थेनापि सप्तग्रहणेन। उच्यते—रूपभेदेऽपि तत्त्वाभेदज्ञापनार्थम्। एवं तर्हि धर्मादीन्यष्टौ रूपाणि बुद्धेर्वक्ष्यमाणानि। अहङ्कारश्च वैकारिक-तैजसभूतादि-रूपत्वात् त्रिलक्षणो वक्ष्यमाणः। तत्र रूपभेदात् तत्त्वभेदो मा भूदित्येवमर्थं सप्तग्रहणं क्रियते।

आह—हेतुमन्तरेणाप्रतिपत्तेः। कण्ठोक्तामपि युक्तिमन्तरेण न तर्कशीलाः प्रतिपद्यन्ते किं पुनर्लेशोपपादितम्। तस्मादत्र समाधिर्वाच्यः। कथमनेकरूपा बुद्धिरेकैवेति, न—उत्तरत्र विचारणात्। उत्तरत्रैतद् विचारयिष्यामः [ 21a ] किमनेकरूपाविर्भावेऽपि तदेव तद्वस्तु भवति, आहोस्विद् रूपभेदात् तत्त्वभेदः। तस्मादिह तावद् दृश्यतामिति सिद्धं महदाद्याः प्रकृतिविकृतयः सप्तेति। **षोडशकस्तु विकारः।** षोडश परिमाणमस्य षोडशकः संघः, तस्य परिमाणम्। "संख्यायाः संज्ञासंघसूत्राध्ययनेषु" [ पा, ५।१।५८ ] इति कन् प्रत्ययः।

आह—कः पुनरयं षोडशक इति। उच्यते—पञ्च महाभूतानि, एकादशेन्द्रियाणि। तुशब्दोऽवधारणार्थः, शक्यः पुनरयमर्थोऽन्तरेणापि तुशब्दमवाप्तुम्। कथम्? महदाद्याः प्रकृतिविकृतयः सप्तेति ह्युपदिष्टं पुरस्तात्, ततोऽहङ्कार-तन्मात्रपूर्वकत्वे सिद्धे सति, इन्द्रियमहाभूतपर्वणोः पुनःश्रुतेर्नियमो भविष्यति। तद् यथा—"पञ्च पञ्चनखा भक्ष्याः" इत्यत्र क्षुत्प्रतीकारसमर्थानां द्रव्याणामर्थादेव सर्वेषां भक्षणे सम्प्राप्ते पुनःश्रुतेर्नियमो भवति तद्वदिदं द्रष्टव्यम्। इष्टतोऽवधारणार्थ इति चेत्, स्यान्मतम्—इष्टतोऽवधारणार्थस्तर्हि तुशब्दो भविष्यति। कथं नाम षोडशको विकार एवेति विज्ञायते। षोडशकस्तु विकार इत्येवं मा ज्ञायीति। यद्येवमस्थाने तर्हि तुशब्दः पठितः, षोडशको विकारस्त्विति वक्तव्यम्। अथ मतं वृत्तपरिपूरणार्थमयमस्मिन् प्रदेशे पठित स्तुशब्दो यत्र निर्दोषस्तत्रैवायं द्रष्टव्य इति। एतदनुपपन्नम्। कस्मात्—असन्देहात्। महदाद्याः प्रकृतिविकृतयः सप्तेत्यपदिष्टे किमिति सांशयिका भविष्यामः। तस्मात् पेलवमस्य पाठे प्रयोजनं पश्यामः। अथायमभिप्रायः स्यात्, यद्यप्येतदर्थतः

1 For different Patañjalis, see Introduction.



सिद्धं तथाऽप्ययमाचार्यः स्फुटप्रतिपत्त्यर्थमवधारणं प्रत्याद्रियते। किं कारणम्? यस्मात् चित्राः सूत्रकाराणामभिप्रायगतयः। तद् यथा भगवान् पाणिनिः 'नः क्ये' ( पा, १।४।१५ ), 'रात् सस्य' ( पा, ८।२।२४ ) इत्येवमादिष्वन्तरेण प्रयत्नमिष्टतोऽवधारणे सिद्धे, अन्यत्र [ 21b ] 'अजादी गुणवचनादेव' ( पा, ५।३।५८ ), 'स्तौतिण्योरेव षण्यभ्यासात्' ( पा, ८।३।६१ ) इत्येवमादिषु यत्नं करोति तद्वदिहापि द्रष्टव्यमिति। एतदनुपपन्नम्। कस्मात्—अशक्यत्वात्। सति वा पुनरवधारणार्थत्वे तुशब्दस्य कथमेवात्र शक्यमवधारणं प्रतिपत्तुं यावता महाभूतानामपि शरीरादिलक्षणं कार्यमुपलभ्यत इति। तत्र केचित् समाधिमाहुः, शरीरादीनामनर्थान्तरभावात् पृथिव्यादीनामप्रकृतित्वम्। यस्मात् किल पृथिव्यादीनां सन्निवेशविशेषमात्रं कार्यं मुष्टिग्रन्थिकुण्डलादिवत् नार्थान्तरभूतम्। अत एषामप्रकृतित्वमिति। एतच्चानुपपन्नम्। कस्मात्—अविशेषात्। सर्वमेव हि सांख्यानां कार्यमनर्थान्तरभूतम्। तत्रैतस्यां कल्पनायां सर्वतत्त्वानामप्रकृतित्वं प्रसज्येत। अथैतदनिष्टं सत्कार्यव्याघातः। अन्ये पुनराहुः—'अपरिणामित्वान्महाभूतानां विकारित्वानवधारणम्' इति। तदप्यनुपपन्नम्। कस्मात्—प्रत्यक्षोपलब्धेः। प्रत्यक्षत एवोपलभ्यते महाभूतानां कलिलाङ्कुर-क्षीरादिपरिणामः। अनुमानग्रहात्तु तत्त्वान्तराणां तदेतदेवोत्तरोत्तरं भवति। तस्मादयुक्तमेतत्।

आह—न तर्हि प्रतिपत्तव्यम् षोडशको विकार एवेति। उच्यते—प्रतिपत्तव्यम्। किं कारणम्? तत्त्वानुपपत्तेः। इह पुरुषार्थेन हेतुना साम्यात् प्रच्युतानां गुणानां योऽयं महदादिविशेषान्तो विपरिणामः स तत्त्वान्तरोत्पत्तिनियमेन व्यवतिष्ठते, न तु पृथिव्यादिभ्य स्तत्त्वान्तरोत्पत्तिरस्ति। तस्मादेतेषां विकारत्वमेवेति। किञ्चान्यत्—ग्राहकान्तराभावात्। यथा तन्मात्रैरारब्धेषु पृथिव्यादिष्वहङ्कारात् तद्योग्यं ग्राहकान्तरमिन्द्रियलक्षणमुत्पद्यते, नैवं पृथिव्यादिविकाराणां घटादीनां ग्राहकान्तरमस्ति। तस्मान्न तत्त्वान्तरम्। अतश्च पृथिव्यादयो विकारा एवेति। किञ्चान्यत्—प्रकृति[ 22a ]-भावप्रत्ययस्तमयवर्ते( ? )षु विकारभावप्रत्ययस्तमयः। यथा प्रधानात् सूक्ष्मतरमवस्थान्तरं नास्तीति प्रकृतिभावस्य प्रत्यस्तमय स्तथा तेषु विकारभावप्रत्यस्तमयः।

आह—पुरुषे तर्हि का प्रतिपत्तिरिति। उच्यते—**न प्रकृति र्न विकृतिः पुरुषः।** न ह्ययमवस्थाऽन्तरं प्रतिपद्यते, नो खल्वप्यवस्थाऽन्तरस्यावस्थाऽन्तरं भवतीति।

आह—न तद्युक्तिमन्तरेण श्रद्धीयते तस्मादुपपाद्यतां किमस्याप्रकृतित्वमविकृतित्वञ्चेति। उच्यते—प्रकृतित्वानुपपत्तिः, उत्तरत्र प्रतिविधानात्। "तस्माच्च विपर्यासात्"

( का, १६ ) इत्यत्र युक्तिमुपदेक्ष्यामः। तस्मात् तावदस्याप्रकृतित्वम्। अविकृतित्वं प्रधानवत्, यथा प्रधानमेवमपि पुरुषः। क्रियमाणः—कारणान्तरैरीश्वरादिभिर्नारभ्यते। कस्मात्? प्रतिषेधात्। यथा कारणान्तराणि न सन्ति तथोत्तरत्र प्रतिषेधः करिष्यते। न पुरुषान्तरैः—समत्वात्। समाः सर्वे पुरुषाः, न च समानां कार्यकारणभावो दृष्टः। किञ्च निष्क्रियत्वात् शुद्धत्वाच्चैषां विपरिणामलक्षणा परिस्पन्दलक्षणा वा क्रिया विभुत्वादनुपपन्ना। कस्मात्? एषामितरेतरानारम्भकत्वात्। न गुणैः भिन्नजातीयकत्वात्। इहाचेतना गुणा इत्येतत् प्रतिपादयिष्यामः। यच्च येनारभ्यते तच्च तन्मयं भवति। यदि गुणैः पुरुषाणामारम्भः स्यात्, तेषामप्यचेतनत्वं स्यात्, चेतनास्तु ते। तस्मान्न गुणैरारभ्यन्त इति सिद्धमेतत्। किञ्चित् कारणमेव न कार्यम्, किञ्चित कारणं कार्यञ्च, किञ्चित् कार्यमेव, किञ्चिन्नैव कारणं नैव कार्यमिति चतुर्विधं कार्यकारणवृत्तं प्रतिपादितम्। एतत् प्रतिज्ञापिण्डसूत्रम्। यदपदिष्टं भवद्भिरस्मिन् शास्त्र इत्यवगन्तव्यम्।

आह—अथास्य प्रमेयस्य कुतः सिद्धिरिति। उच्यते—**प्रमेयसिद्धिः प्रमाणाद्धि।** प्रमीयते तदिति[ 22b ] प्रमेयम्, प्रमेयस्य सिद्धिः—प्रमेयसिद्धिः। सिद्धिरवगमोऽवबोध इत्यर्थः। प्रमीयतेऽनेनेति प्रमाणम्, करणसाधनो ल्युट्। तदेकमेव बुद्धेरेकत्वाभ्युपगमात्। उपाधिवशात्तु भिन्नमाश्रीयते, प्रत्यक्षमनुमानमित्यादि। तस्य योऽसावुपाधिकृतो भेद स्तमनाश्रित्य प्रमेयपरिच्छेदकत्वमङ्गीकृत्यैकवचननिर्देशः क्रियते 'प्रमाणात्' इति। एतस्मात् प्रमेयसिद्धिरित्यवगन्तव्यम्। कथम्? व्रीह्यादिवत्। यथा व्रीह्यादिप्रमेयं प्रस्थादिना परिमाणेन परिच्छिद्यत इति। हिशब्दः इदानीं किमर्थः स्यात्? अवधारणार्थ इति।

आह—यद्येवं हिशब्दावचनम्, अवधारणानुपपत्तेः। न ह्येतस्मिन् सूत्रे कथञ्चिदवधारणमुपपद्यते। तस्मादवचनमेव हिशब्दस्य न्याय्यम्। प्रमेयस्येति चेन्न, अन्यस्यासम्भवात्। सति हि व्यभिचारसम्भवे वस्त्ववधार्यते। तद् यथा,—गौरेवायं नाश्वः, देवदत्त एवायं न यज्ञदत्त इति। न च प्रमेयाप्रमेययोः प्रमाणपरिच्छेद्यत्वेऽस्ति प्रसङ्गो यन्निवृत्त्यर्थं प्रमेयस्यैवेत्यवधार्यते। प्रमाणेभ्य एवेति चेन्न, आत्मज्ञानविरोधप्रसङ्गात्। परमर्षे र्हि भगवतः सांसिद्धिकमप्रमाणपूर्वकमिति वः पक्षः। "सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः" ( का, ४३ ) इति वचनात्। तदेवं सति विरुध्यते। उभयावधारणमिति चेन्न, उभयदोषप्रसङ्गात्। उभयावधारणे सति उभयोरपि पक्षयो र्ये दोषास्ते प्रसज्यन्ते। तस्मादयुक्तमेतत्। सिद्धिरेवेति चेत्—न, अनेकान्तात्। कदाचिद् ह्ययं प्रमाता सन्निहितेऽप्यादित्यादौ लिङ्गे दिङ्निश्चयादिष्वर्थेषु प्रतिहन्यते।



तस्मादनेकान्तात् सिद्धिरेवेत्येतदयुक्तमवधारणम्। उच्यते—यदुक्तं हिशब्दावचनमवधारणानुपपत्तेरिति[ 23a ], अस्तु प्रमाणेभ्य एवेत्यवधारणम्। यत्तूक्तमार्षज्ञानविरोधप्रसङ्ग इति, अयमदोषः। कस्मात्—सिद्धरूपत्वात्। साध्यमानरूपाणि हि वस्तूनि नान्तरीयकत्वात् स्वरूपनिष्पत्तेः साधनसम्बन्धं प्रत्याकाङ्क्षावन्ति भवन्ति, सिद्धरूपं तु भगवतः परमर्षेर्ज्ञानम्। तस्मादस्य साधनसम्बन्धं प्रत्याकाङ्क्षा नोपपद्यत इति। अथवा पुनरस्तु सिद्धिरेवेत्यवधारणम्। यत्तूक्तमनेकान्तादिति तदनुपपन्नम्। कस्मात्? सत्त्वादीनामङ्गाङ्गिभावनियमात् तमःप्रकर्षसामर्थ्यात् प्रमाणवैकल्योपपत्तेः। इह सत्त्वादीनामनियतोऽङ्गाङ्गिभावः, देशकालनिमित्तसामर्थ्याद्धि कदाचित् सत्त्वं प्रकृष्यते, कदाचिद् रजः, कदाचित् तमः। प्रकाशश्च प्रकाशरूपत्वात् प्रमाणम्। तत्र यदा तमः प्रकृष्यते तदा तेनाभिभूतत्वात् सत्त्वस्य तत्कार्यमनुमानं त्रिकालाङ्गमुपतिष्ठत इत्यतः सत्यामपि आदित्यादिलिङ्गप्रवृत्तौ दिङ्निश्चयादिष्वर्थेषु प्रतिहन्यते। इतरथा तु न स्वरूपहानम्। यस्य तु निष्पत्तिवैकल्यात् प्रमाणप्रतिबन्धो नेष्टः तस्य स्वरूपहानं प्रमाणानां प्राप्तम्। कथम्? एतावद्धि तेषां स्वरूपं यदुत प्रमेयपरिच्छेदः। तस्माद् युक्तमेतदवधारणार्थो हिशब्दः।

आह—बहूनि प्रमाणानि आचार्यैरभ्युपगम्यन्ते। तानि सर्वाणि किं भवाननुमन्यते। नेत्युच्यते, किन्तर्हि—

[ दृष्टमनुमानमाप्तवचनञ्च सर्वप्रमाणसिद्धत्वात्।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥ ]

**त्रिविधं प्रमाणमिष्टम्**—विधानं विधा, तिस्रो विधा अस्य तत् त्रिविधं त्रिप्रकारमित्यर्थः। अनेनैतदाचष्टे, एकमेव बुद्धिलक्षणं सत्त्वं निमित्तान्तरानुग्रहोपजनिताभिः कार्यविशेषपरिच्छिन्नरूपभेदाभिः शक्तिभिरुपकाराद् भिन्नमिव प्रत्यवभासमानं दृष्टादिशब्दवाच्यं भवति। न तु यथा तन्त्रान्तरीयाणां विषयोपनिपातिभिः इन्द्रियैरुपजनिता बह्व्यो बुद्धयस्तथेह विद्यन्ते याः परिकल्प्यमानाः स्वतन्त्रा[ 23b ]णि त्रीणि प्रमाणानि स्युः। स्यान्मतम्—कथं पुनः प्रमाणलक्षणानां शक्तीनामेकवस्तुसन्निवेशे रूपभेदा भवन्तीति। उच्यते—सत्त्वादिवत्। यथा—सत्त्वादीनां गुणानामेकशब्दादिवस्तुसन्निवेशेऽपि प्रकाशादिकार्यभेदाद् रूपसङ्करो न भवति; यथा वा शब्द-स्पर्श-रूप-रस-गन्धानामेकद्रव्यसन्निवेशेऽपि ग्राहकान्तरगम्यत्वात्; यथा वा कर्तृ-करणाधिकरण-सम्प्रदानापादान-कर्मलक्षणानां शक्तीनामेकद्रव्यसन्निवेशेऽपि कार्यविशेषे परिच्छिन्नानि

स्वरूपाणि न सङ्कीर्यन्ते, तद्वदिदं द्रष्टव्यम्। शक्त्यन्तरोपजनने वस्त्वन्तरोपपत्तिरिति चेत्—न, अनभ्युपगमात्। न हि क्षणभङ्गसाहसं युक्तिमन्तरेण दण्डभयादपि प्रतिपद्यामहे, न तु तस्यामवसर इति स्थीयतां तावत्।

आह- कथं पुनरेतद् गम्यते यथा त्रिविधमेव प्रमाणं न पुनरनेकविधमपीति। उच्यते—**सर्वप्रमाणसिद्धत्वात्।** सर्वाणि च तानि प्रमाणानि—सर्वप्रमाणानि, सिद्धस्य भावः सिद्धत्वम्, सर्वप्रमाणानां सिद्धत्वं सर्वप्रमाणसिद्धत्वम्। सिद्धत्वमन्तर्भाव इत्यर्थः, तस्मात् सर्वप्रमाणसिद्धत्वात्। तस्मिन्नेव त्रिविधे प्रमाण इति वाक्यशेषः। सर्वेषां परपरिकल्पितानां प्रमाणानामस्मिन्नेव त्रिविधे प्रमाणेऽन्तर्भावादिति। यावदुक्तं स्यात् तावदिदमुच्यते सर्वप्रमाणसिद्धत्वादिति। अथवा सर्वप्रमाणेषु सिद्धं सर्वप्रमाणसिद्धम्, [1]सप्तमी सिद्ध-शुष्क-पक्वबन्धैरिति समासः; यथा साङ्काश्यसिद्धः पाटलिपुत्रसिद्ध इति—तद्भावः सर्वप्रमाणसिद्धत्वम्। तस्मात्—सर्वप्रमाणसिद्धत्वात्। कस्य [2]त्रिविध .... .... .... .... ....
.... .... .... .... .... ....
द्धं गवयमुपलभते साधर्म्यमात्रात्। तस्मान्न शब्दात् पृथगुपमा।

[24a] यत्तु खल्विति होवाच याज्ञवल्क्य इत्येतदैतिह्यं नाम प्रमाणान्तरमुपकल्प्यते, तदपि वक्तृविशेषापेक्षत्वान्न शब्दादर्थान्तरम्।

आह—न, साधर्म्यापेक्षत्वात्। यदि ह्याप्तोपदेश उपमा स्यात तेन यथा स्वर्गेऽप्सरसः, उत्तराः कुरव इत्येवमादिष्वन्तरेण साधर्म्योपादानं प्रतिपत्तिर्भवति एवमिहापि स्यात्। गवयं त्वयमाख्याता प्रतिपादयिष्यन् प्रसिद्धसाधर्म्यगर्भं शब्दमुपादत्ते, न केवलं प्रतिपत्ताऽपि तस्मादेव प्रतिपद्यते न शब्दमात्रात्। तस्मात् पृथगेवास्योपदेशः कर्तव्यः। शब्दव्यापारादन्तर्भाव इति चेत्—न, वीतावीतयोरपि तत्प्रसङ्गात्। वीतावीतावेव हेतू परप्रतिपादनार्थमुपादीयमानौ शब्दव्यापारमपेक्षेते, तयोरप्याप्तवचनत्वप्रसङ्गः। अनिष्टश्चैतत्। तस्मात् नोपमानमाप्तोपदेशः। उच्यते—साधर्म्याव्यतिरेक उपायभूतत्वात्। आख्यातृप्रामाण्यादेव प्रतिपत्तुर्गवयविज्ञानमुपपद्यते, स तु कौशलात् दुरुपपादोऽयमर्थ इति कृत्वा प्रसिद्धसाधर्म्यमुपादत्ते। तस्मादाख्यातुर्गवयप्रतिपादनार्थमुपायभूतं साधर्म्यमुपाददानस्य शब्दादनर्थान्तरमुद्भवति। अथैवञ्जातीयकानामपि

1 Cf. सिद्धशुष्कपक्वबन्धैश्च Pā, 2. 1. 41.

2 Here in the Ms. some lines are left blank.



प्रमाणान्तरत्वमिष्यते तेनात्यल्पमिदमुच्यते चत्वारि प्रमाणानीति। किन्तर्हि पाणिविहाराक्षिनिकोच-प्रभृतीनामप्युपसंख्यानं कर्तव्यम्। किञ्च वक्तृविशेषापेक्षत्वात्। यत्र ह्यर्थवशात् प्रतिपत्तिरुत्पद्यते तत्र प्रतिवक्तृविशेषमपेक्षते, दृष्टार्थोऽयमदृष्टार्थोऽयमिति। तद्यथा—अस्ति चोपमाने वक्तृविशेषापेक्षा, तस्मात् न शब्दादर्थान्तरं तत्। अवश्यं चैतदेव विज्ञेयं यो हि मन्यते प्रसिद्धसाधर्म्यादेव तस्य या प्रतिपत्तिर्यथाऽश्वस्तथा गवय इत्येतस्मादपि सम्प्रतिपत्तिः स्यात्, न चार्हति भवितुं मिथ्याज्ञानत्वात्। यत्तु खल्विदमुच्यते यतः [24b] समाख्यासम्बन्धप्रतिपत्तिरिति तदुपमानमिति, एतदनुपपन्नम्। कस्मात्—अनवस्थाप्रसङ्गात्। यथा बहुषु निषण्णेषु कोऽत्र देवदत्त इत्युक्ते यो मुकुटी कुण्डली व्यूढोरस्कस्ताम्रायताक्ष इति प्रत्याह। ततश्च समाख्यासम्बन्धप्रतिपत्तिरिति प्रमाणान्तरप्रसङ्ग इत्येवमनवस्था प्रमाणानां स्यात्। अनिष्टं चैतत्। एवं हि न तावत् परत उपमानं प्रमाणान्तरम्। यदा स्वयमेव गां गवयं चोपलभ्य विकल्पयति यथाऽयं तथाऽयमिति तदा तस्यार्थस्य प्रमाणान्तरेणाधिगतत्वात् प्रमाणमेव तन्न भवतीति। तस्मात् सुष्ठूक्तमिदमैतिह्यावचनमाप्तोपदेशात् सिद्धेरिति। किञ्चान्यत्—अर्थापत्ति-सम्भवाभाव-चेष्टानामनुमानसिद्धेः। अवचनमित्यनुवर्तते। तत्र अर्थापत्तिर्नाम यत्रार्थयोः पूर्वमव्यभिचारमुपलभ्य पश्चादन्यतरस्य दर्शनात् श्रवणाद्वाऽन्यतरस्मिन् प्रतिपत्तिर्भवति। दर्शनाद् यथा—गुडमुपलभ्य माधुर्यमिन्द्रियान्तरविषयं प्रतिपद्यते। श्रवणाद् यथा—गुडशब्दं श्रुत्वा माधुर्यमशब्दकं प्रतिपद्यत इति। अपरा खल्वर्थापत्तिः—यत्र धर्मयोरव्यभिचारमुपलभ्य तत्प्रतिद्वन्द्विनोरपि साहचर्यकल्पना। सा तु द्विविधा—व्यभिचारिणी चाव्यभिचारिणी च। तत्र व्यभिचारिणी यथा सावयवमनित्यमित्युक्तेऽर्थादापन्नं निरवयवं नित्यमिति। तच्च कर्मादिष्वदृष्टमित्येषाऽनैकान्तिकत्वात् प्रमाणमेव न भवतीति। या त्वविनाभाविनी, अव्यभिचारिणी। यथा—केशरिवराहयोरुपह्वरे सन्निपातमुपलभ्योत्तरकालं केवलं केशरिवराहयोरुपह्वरे वराहव्रणाङ्कितशरीरं प्रयान्तमुपलभ्य प्रतिपद्यते जितो वराह इति तदनुमानम्। कथम्? यस्मात् केशरिवराहयो यौ जयपराजयौ तयोरव्यभिचारी सम्बन्धः। तत्र यदा केशरिणो जयमुपलभ्याव्यभिचारिणमुत्तरस्य पराजयं प्रतिपद्यते, किमन्यत् स्यादृतेऽनुमानात्। [25a] अधिगतोभयसम्बन्धिसमुदायस्य हि प्रतिपत्तुः प्रत्यक्षीभूतान्यतरसम्बन्धिनो या सम्बन्ध्यन्तरप्रतिपत्तिस्तदनुमानम्। इत्थं चार्थापत्तिरतो न तस्मात् पृथग् भवितुमर्हति।

सम्भवो नाम द्रोणः प्रस्थ इत्युक्तेऽर्द्धद्रोणादीनां सन्निधानमवसीयते, इयमपि साहचर्यकल्पनयाऽर्थापत्तिरेव। कथम्? यस्मादुक्तपरिमाणे द्रव्ये द्रोणशब्दो वर्तते, न

न्यूने नाधिके। तत्र द्रोण इत्युक्ते यदत्यन्तसहभुवां तदवयवानामन्यशब्दवाच्यानामपि सन्निधानं तदर्थापत्तिरिति। सा चानुमानमित्युक्तम्।

अभावो नाम तद्यथा धूमस्य भावादग्नेर्भावः प्रतीयते। एवं धूमाभावादग्न्यभाव इत्ययं प्रतिद्वन्द्विसाहचर्यकल्पनयाऽर्थापत्तिरभिहितः। तत्र यदा व्यभिचारसाहचर्यकल्पना तदा प्रमाणाभाव एव। तद् यथा—ह्ययोगुडाऽङ्गारादिषु धूमाभावो नाग्न्यभावः। यत्र तु क्वचिदेकान्तः स्यात्, यथाऽकृतकत्वान्नित्य इति तत्रानुमानम्। कथम्? साहचर्योपपत्तेः कृतकत्वानित्यत्ववत्। अन्ये तु अभावमन्यथा वर्णयन्ति। तत् यथा गेहे नास्ति चैत्र इत्युक्ते बहिरस्तीति सम्प्रत्ययो भवति। तत्र गेहाभावो बहिर्भावसम्प्रतिपत्तिहेतुरर्थापत्तिरेव प्रतिद्वन्द्विसाहचर्यकल्पनया। कथम्? यथैव हि दिवा न भुङ्क्ते देवदत्त इत्यभोजनप्रतियोगिनो मेदुरत्वस्योपलम्भात् दिवाप्रतियोगिनि काले भुजिरवसीयते; एवमिहापि गेहाभावाभिधानसामर्थ्यात् तत्प्रतियोगिनि विपर्ययः कल्प्यते। अन्यथा तु यद्यभाव एवाभिप्रेतः स्यात्, नास्ति चैत्र एवेति ब्रूयात्। अर्थापत्तिश्चानुमानम्।

चेष्टा नामाभिप्रायसूचकः कश्चिदेवोदरताडनाऽञ्जलिकरणादिः शरीरव्यापारः। स हि बुभुक्षादीन्यपि प्रतीयमानानि प्रतिपादयतीति[ 25b ] प्रमाणमित्युच्यते। स चानुमानमेव। कस्मात्? यस्माद् भोजनेच्छादिसहचरो हि व्यापारोऽनुष्ठीयमानो यदि सहचारिणं गमयति तदा नानुमानात् पृथगिति शक्यं प्रतिज्ञातुम्।

आह—प्रतिभा तर्हि प्रमाणान्तरं भविष्यति, उच्यते—कोऽयं प्रतिभा नाम। आह, योऽयमनादौ संसारे देवमनुष्यतिरश्चामितिकर्तव्यताऽङ्गत्वात् प्रमाणमिति। आह च—

"प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति।
व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात्" ॥

उच्यते—प्रतिभाया दृष्टादिव्यतिरेकेण रूपान्तरानुपपत्तेः, अवचनमित्यनुवर्तते। यदि पूर्वाभ्यासवासनापेक्षः प्रत्ययः प्रतिभेत्यभ्युपगम्यते, तेन तर्ह्यसौ प्रत्यक्षमनुमानमाप्तवचनञ्चेत्येतदापन्नम्। कस्मात्—यतो न हि दृष्टादिव्यतिरेकेण प्रत्ययरूपं कदाचिदप्युपलभामहे, तस्मान्न तेभ्योऽर्थान्तरं प्रतिभा। आर्षप्रत्ययसम्भवादयुक्तमिति चेत्, स्यादेतत्—अस्त्यार्षे दृष्टादिव्यतिरेकेण सर्वपदार्थेषु सांसिद्धिकः प्रत्ययः, स प्रातिभो भविष्यतीति, एतच्चाप्ययुक्तम्। कस्मात्—उक्तत्वात्। उक्तमेतत् सिद्धरूपं भगवतः परमर्षे-



र्ज्ञानम्। अतो न प्रकरणापेक्षमिति। योगिनामिति चेत्—न, अनभ्युपगमात्। न हि योगिनामप्रमाणपूर्वकं ज्ञानमिति यथा तथा वक्ष्यामः। स लौकिक इति चेत्—न, अनिश्चितत्वात्। स्यादेतत्—अस्ति लौकिकः प्रत्ययो दृष्टादिव्यतिरेकेण, तद् यथा—सन्तमसे व्रजतो द्रागिति विज्ञानमुत्पद्यते, अस्ति मे प्रतिघाति द्रव्यं पुरस्तादूर्द्ध्वमवस्थितमिति। तच्च नैवम्। कस्मात्—अनिश्चितत्वात्। न हि तत्र निश्चय उत्पद्यते। इदं तद् द्रव्यमस्ति पुरतो वा व्यक्तमस्तीति। न चानिश्चितं प्रमाणज्ञानमिष्यते। किञ्चान्यत्—अनवस्थाप्रसङ्गात्। यदि चैवञ्जातीयकोऽपि[ 26a ] प्रत्ययः प्रमाणमभ्युपगम्यते तेनानवस्था प्राप्नोति। किं कारणम्—अनवस्थानाद्धि करणस्य कामक्रोधलोभ-भयविषादद्वारको विकल्पः सम्यङ्मिथ्या वा यस्मादनेक उत्पद्यते, तस्मान्न लौकिकः प्रत्ययः प्रतिभा। यत्तु खल्विदमुच्यते, अर्थाभ्यासवासनाऽपेक्षा सत्स्वपि व्याघ्रादिषु प्रतिपत्तिरुत्पद्यत इति, सत्यमेतत्। सा तु मिथ्याज्ञानत्वात् प्रमाणत्वेन न परिगृह्यते इत्ययमदोषः। तस्मात् सिद्धं दृष्टादिव्यतिरेकेण रूपान्तरानुपपत्तेः प्रतिभायाः पृथगनभिधानम्। ततश्च सर्वप्रमाणसिद्धत्वात् त्रिविधं प्रमाणमिष्टमिति व्यवस्थितमेतत्।

आह—अस्त्वेवमेतत्। लक्षणानभिधानात् तदप्रतिपत्तिः, तस्मात् तदभिधानम्। अनवस्थितं हि दृष्टादीनां लक्षणं दृष्टिवैचित्र्यात्। 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि-व्यवसायात्मकं प्रत्यक्षम्' (न्या, सू, १।१।४) इति केचित्, तथा—[1]'आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत् (वै, सू, ३।१।१८) इत्येके, 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' (मी, सू, १।१।४), श्रो त्रा दि वृ त्ति रि ति वा र्ष ग णाः, [2]कल्पनापोढमित्यन्ये। इत्थमनवस्थितं लक्षणमिति दृष्टादीनामप्रतिपन्नः। तस्माल्लक्षणमभिधानीयम्। उच्यते—

---

1 The Benares and the Gujrat editions of VS. read, आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्. Also see, यद्यपि कैश्चित् प्रत्यक्षलक्षणमुक्तम्—आत्मेन्द्रिय-म नो ऽर्थसन्निकर्षाद् यदुत्पद्यते ज्ञानं तदन्यदनुमानादिभ्यः प्रत्यक्षमिति, *Nyāyamañjarī*, p. 109.

2 Cf. प्रत्यक्षं कल्पनापोढं नामजात्यादि-योजना।
असाधारणहेतुत्वादक्षैस्तद्व्यपदिश्यते ॥
*Tattvārtha-rājavārttika*, p. 38.

Also see, अपरे तु मन्यन्ते प्रत्यक्षं कल्पनापोढमिति। अथ केयं कल्पना? नामजाति-योजनेति, NV. 1. 1. 4. Here Vācaspati in his NVT. says, सम्प्रति दिङ्नागस्य लक्षणमुपन्यस्यति—अपर इति। He further quotes—'प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यति', with the remark—यथाऽऽह. Further, प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम्, *Pramāṇa-samuccaya* of *Diṅgnāga*—restored into Sanskrit from Tibetan, p. 8.

[ प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनञ्च ॥ ५ ॥ ]

**प्रतिविषयाध्यवसायो दृष्टम्**—विषिन्वन्तीति विषयाः शब्दादयः। अथवा विषीयन्त उपलभ्यन्त इत्यर्थः। ते च द्विविधाः—विशिष्टाः पृथिव्यादिलक्षणा अस्मदादिगम्याः, अविशिष्टाश्च तन्मात्रलक्षणा योगिनामूर्द्ध्वस्रोतसां च गम्याः। वक्ष्यति चैतदुपरिष्टात्—'बुद्धीन्द्रियाणि तेषां पञ्च पञ्च विशेषाविशेषविषयाणि' ( का, ३४ ), 'अध्यवसायो बुद्धिः' ( का, २३ ) इति च वक्ष्यति। विषयं विषयं प्रति वर्तत इति प्रतिविषयम्। किं तत्? इन्द्रियम्। तस्मिन् योऽध्यवसायः स प्रतिविषयाध्यवसा[26b]-यः। [1]'उपात्तविषयाणामिन्द्रियाणां वृत्त्युपनिपाति सत्त्वोद्रेकादरजस्तमस्कं यत् प्रकाशरूपं यद् दृष्टमिति यावत्, तद्दृष्टं प्रत्यक्षमित्यर्थः। एतत् प्रमाणम्। अनेन यश्चेतनाशक्तेरनुग्रहस्तत् फलम्, प्रमेयाः शब्दादयः। एवमुत्तरत्रापि प्रमाणफलभावो द्रष्टव्यः।

आह—किं पुनरिदं प्रमाणात् फलमर्थान्तरमाहोस्विदनर्थान्तरम्। उच्यते—करणभाव इदानीं कथं स्यात्, करणभावस्तु प्रसिद्धिवशात्। विषयनिर्भासा हि ज्ञानस्योत्पत्तिरधिगमरूपाऽपि लोके सव्यापारेव प्रतीतेति कल्पनया करणभावोऽभ्युपगम्यते न परमार्थतः। उच्यते—फलस्यार्थान्तर्भावः, अधिकरणभेदात्। बुद्ध्याश्रयं हि प्रमाणमध्यवसायाख्यं, पुरुषाश्रयं फलमनुग्रहलक्षणम्। न च भिन्नाधिकरणयोरेकत्वमर्हति भवितुम्। यत्तूक्तमधिगमरूपत्वाज् ज्ञानमेव फलमिति, तदनुपपन्नम्। कस्मात्—असिद्धत्वात्। यथैव हि घटादयोऽर्था ज्ञानमन्तरेण न तद्रूपा नातद्रूपा इति न शक्यं प्रतिपत्तुम्, एवं ज्ञानमपि पुरुषप्रत्ययमन्तरेण न विषयरूपं नाविषयरूपम्। तथा च शास्त्रम्—'तत्संयोगादचेतनं चेतनावदिव लिङ्गम्' ( का, २० ) इति। अतः पुरुषप्रत्ययमन्तरेण ज्ञानमधिगमरूपमिति सांख्यं प्रत्यसिद्धमेतत्। उभयपक्ष-प्रसिद्धेन च व्यवहारः। पुरुषाभावादयुक्तमिति चेत्—न, उत्तरत्रप्रतिपादनात्। 'संघातपरार्थत्वात्' ( का, २७ ) इत्यत्र पुरुषास्तित्वं प्रतिपादयिष्यामः। तस्मात् सिद्धमध्यवसायप्रमाणवाचिनः प्रमाणात् फलमर्थान्तरमिति।

आह—यदि ह्यध्यवसायः प्रमाणं कथं लौकिकः प्रयोगोऽर्थवान् भवति, प्रत्यक्षं

1. Cf. उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः··· ··· ··· अनेन यश्चेतनाशक्तेरनुग्रहस्तत् फलं प्रमा बोधः, TK. on Kārikā V.



वस्त्विति। उच्यते—विषये प्रत्यक्षशब्दः तत्प्रमितत्वात्। यथा प्रस्थप्रमितो व्रीहिराशिः प्रस्थशब्दवाच्यो भवति, एवं प्रत्यक्षप्रमितोऽर्थः प्रत्यक्षशब्दवाच्यः स्यात।

[ 27a ]आह—न, अन्यत्रापि तत्प्रसङ्गात्। यदि प्रत्यक्षप्रमितत्वाद् विषये प्रत्यक्षशब्दस्तेन तर्हि अनुमानप्रमितोऽर्थोऽनुमानमिति स्यात, शब्दप्रमितोऽर्थः शब्द इति। न चाग्निस्वर्गादयः प्रमाणशब्दवाच्या भवन्ति, तस्माद् विषममेतत्। एतेन तत्कारणभावः प्रत्युक्तः। योऽपि हि मन्यते प्रत्यक्षोपदेश स्तत्कारणेष्वप्रतिषेध्य इति विषये प्रत्यक्षशब्दस्तस्याप्यनुमानप्रसङ्गोऽसाववस्थित इति। उच्यते—कारणतुल्यत्वम्। एवं तर्हि अक्षमक्षं प्रति वर्तत इति प्रत्यक्षमुच्यते। द्वयं चाक्षं प्रति वर्तते—विषयोऽध्यवसायश्च। विषयोऽनुग्राहकत्वेन, अनुग्राह्यत्वेनेतरः। तेनोभयोरपि तुल्यं निमित्तमिति कृत्वा तुल्यशब्दवाच्यता भविष्यति।

आह—इतरत्र कथम्? उच्यते—तदभावादितरत्राप्रवृत्तिः। प्रमाणान्तरे तु नास्ति सामान्यं निमित्तम्। कथम्? अनुमीयतेऽनेनेत्यनुमानम्। न चाग्न्यादिभिः कश्चिदनुमीयत इत्यतस्तुल्यशब्दवाच्यता न भवति।

आह—अध्यवसायग्रहणं किमर्थम्। उच्यते—अतिप्रसङ्गनिवृत्त्यर्थम्। प्रतिविषयं दृष्टमितीयत्युच्यमाने यावत् किञ्चित् प्रतिविषयं वर्तते अनुग्राहकत्वेनोपघातकत्वेन वा, तत् सर्वं दृष्टमित्येतदापद्यते। अध्यवसाये ग्रहणे पुनः क्रियमाणे न दोषो भवति।

आह—प्रमाणाधिकारात नाध्यवसायशब्दस्य प्रयोजनम्। कुतः—प्रमाणाधिकारोऽयम्। न चाध्यवसायादृते यत् किञ्चिद् विषयं प्रति वर्तते तेन किञ्चित् प्रतीयते। तेन वयं सामर्थ्यादध्यवसायमेवाभिसंभन्त्स्यामः। तद् यथा, अध्ययनाधिकारे ब्राह्मणा आनीयन्तामित्युक्ते य एवाधीयन्ते त एवानीयन्ते। उच्यते—करणान्तराणां तु सन्देहनिवृत्त्यर्थम्। एवं तर्हि श्रोत्रादीनामन्यतममन्तःकरणं चेत्येतद् द्वारद्वारिभावेन च-[ 27b ]-तुष्टयं विषयं प्रतिवर्तते। तस्मादध्यवसायग्रहणं क्रियते सन्देहो मा भूदिति।

आह—अस्त्यत्र सन्देहः। नैकेन केनचित् कश्चिद्विषय उपादीयते। तेन वयं सर्वेषां प्रत्यक्षत्वं प्रतिपत्स्यामहे। उच्यते—सर्वाभ्युपगमे हि शास्त्रहानिः प्रमाणम्। यदि पुनः सर्वेषामेव प्रमाणत्वमभ्युपगम्यते, तेन यच्छास्त्रम् [1]'एकमेव दर्शनं ख्यातिरेव दर्शनम्' इति तद्धीयते। वक्ष्यति चाचार्यः—'एते प्रदीपकल्पाः'

1 Quoted in the Bhāṣya on Yoga-sūtra, 1. 4, with the remark—तथा च सूत्रम्.

( का, ३६ )। 'सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः' ( का, ३७ ) इति तद्विरुध्यते। तस्मादध्यवसायग्रहणं कर्तव्यम्, सन्देहो मा भूदिति।

आह—सन्देहमात्रमेतद्भवति। सर्वसन्देहेषु चैतदुपतिष्ठते—''व्याख्यानतो विशेषप्रतिपत्ति र्न हि सन्देहादलक्षणम्'। तत्राध्यवसायो दृष्टमिति व्याख्यास्यामः। उच्यते—मुक्तसंशयं चेन्द्रियवृत्तिप्रतिपत्तेः। स्यादेतत्—यद्यत्र सन्देहः स्यात्। नैव तत्र सन्देहः प्राप्तः। किं तर्हि श्रोत्रादिवृत्तेरेव ग्रहणम् ?

आह—किं पुनः कारणं श्रोत्रादिवृत्तेरेवात्र ग्रहणं प्राप्नोति, नान्तःकरणस्यैव प्रत्यक्षत्वम्। उच्यते—तत्र च मुख्या श्रोत्रादिवृत्तिः। कस्मात् ? साक्षाद् विषयग्रहणसामर्थ्यात्, नान्तःकरणं तद्द्वारेण प्रतिपत्तेः। गौणमुख्ययोश्च मुख्ये सम्प्रतिपत्तिः। तद् यथा—गौरनुबन्ध्यः, अजोऽग्नीषोमीय इति बाहीको नानुबध्यते।

आह—यदीयं श्रोत्रादिवृत्तिरेव प्रत्यक्षमित्यभ्युपेयते, क एवं सति दोषः स्यात् ? उच्यते—रागादिविषयं यद्विज्ञानं लिङ्गलिङ्गिपूर्वकं योगिनां च ध्यानभूमिकासु विहरतां प्रातिभं यद्विज्ञानमुत्पद्यते तदुपसंख्येयं स्यात्। कुतः—न हि सुखादयः श्रोत्रादिवृत्तिग्राह्याः। योगिनां चातीन्द्रियं ज्ञानमिति यथान्यासं तु क्रियमाणे तेऽपि विषयाः, तेषां योऽध्यवसायस्तस्य प्रत्यक्षत्वं केन वार्यते ?

[ 28a ]आह—प्रतिविषयग्रहणं तर्हि किमर्थम्। उच्यते—प्रतिविषयग्रहणमसद्व्युदासार्थम्। अध्यवसायो दृष्टमितीयत्युच्यमाने मृगतृष्णिकाऽलातचक्र-गन्धर्वनगरादिषु योऽध्यवसाय स्तद् दृष्टमिति स्यात्। प्रतिविषयग्रहणात्तु तेषां व्युदासः कृतो भवति। यद्येवं विषयाध्यवसाय इत्येव चोच्यताम्, किं प्रतिग्रहणेन। उच्यते—प्रतिग्रहणं सन्निकर्षार्थम्। विषयाध्यवसायो दृष्टमितीयत्युच्यमाने विषयमात्रे सम्प्रत्ययः स्यात्। प्रतिना तु [2]आभिमुख्यं द्योत्यते। तेन सन्निकृष्टेन्द्रियवृत्त्युपनिपाती योऽध्यवसाय स्तद् दृष्टमित्युपलभ्यते।

आह—कस्य पुनरतीन्द्रियसन्निकर्षे प्रत्यक्षत्वं प्राप्नोति। उच्यते—अनुमानस्य। कस्मात्—तद्धि लिङ्गदर्शनादसन्निकृष्टे विषये भवति।

---

1 See *Mahābhāṣya* on the *Vārttika*, यूरन्यच परेण स्यात्—*Śiva-sūtra*, 6.

2 Cf. ईश्वरकृष्णस्तु प्रतिविषयाध्यवसायो दृष्टमिति प्रत्यक्षलक्षणमवोचत्। … … … यत्तु राजा व्याख्यातवान्—प्रतिराभिमुख्ये वर्तते, तेनाभिमुख्येन विषयाध्यवसायः प्रत्यक्षमिति, *Nyāyamañjarī*, p. 109.



आह—अनुमानस्याप्रसङ्गः, सामान्यविहितस्य विशेषविहितेन बाधनात्। सामान्यं विषयमात्रेऽध्यवसायस्य प्रत्यक्षत्वं विधाय विशेषे लिङ्गलिङ्गिपूर्वकेऽनुमानं शास्ति। सामान्यविहितं च विशेषविहितेन बाध्यते। यथा दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्यायेति। उच्यते—स्मृतेस्तर्हि प्रत्यक्षत्वं प्राप्नोति। तत्रायमपवादो नाभिनिविशत इति। न स्मृतेः—प्रमाणाधिकारात्। प्रमाणाधिकारोऽयम्। न च स्मृत्या किञ्चित् प्रमीयते, स्मृतेः प्रमितेऽर्थे प्रादुर्भावात्। उच्यते—संशयस्य तर्हि प्राप्नोति। न संशयस्य, अध्यवसायग्रहणात्। अध्यवसायो हि दृष्टमित्युच्यते। न च संशयोऽध्यवसायोऽनिश्चितत्वात्। उच्यते—इन्द्रियान्तराकूतविषये तु प्रसङ्गः। एवं तर्हीन्द्रियार्थसन्निकृष्टेन्द्रियवृत्त्युपनिपातीति दोषो न भवति।

आह—रागाद्युपसंख्यानम्। यदि सन्निकृष्टेन्द्रियवृत्त्युपनिपाती योऽध्यवसाय स्तद् दृष्टमित्यभ्युपेयते तेन [1]रागादिविषयं विज्ञानमतीन्द्रिय[ 28b ]त्वात् प्रत्यक्षं न प्राप्नोति, तस्योपसंख्यानं कर्तव्यम्। उच्यते—न, तर्हीदं प्रतिग्रहणमिन्द्रियविशेषणम्—विषयं विषयं प्रति यो वर्तते तस्मिन् योऽध्यवसाय स्तद् दृष्टमिति ; किं तर्हि अध्यवसायविशेषणम्—विषयं विषयं प्रति योऽध्यवसाय इति।

आह—अध्यवसाय-विशेषणमिति चेत्, शब्दाद्युपसंख्यानम्। शब्दादीनामेव तेन प्रत्यक्षत्वं प्राप्नोति, तेषामुपसंख्यानं कर्तव्यं प्राप्नोति। किं कारणम् ? अन्तःकरणस्य तैः सन्निकर्षानुपपत्तेः। प्रतिग्रहणं सन्निकर्षार्थमिति पूर्वमतिसृष्टं भवता, तच्चेदानीमन्तःकरणविशेषणम्। न चान्तःकरणस्य शब्दादिभिः सन्निकर्ष उपपद्यते श्रोत्रादिवैयर्थ्यप्रसङ्गात्, द्वारिद्वारभावस्यापघात-प्रसङ्गाच्च। तस्मात् सुदूरमपि गत्वा प्रतिग्रहणं प्रत्याख्यानान्न मुच्यते। रागाद्युपसंख्यानाद्वेति। उच्यते—अस्तु तर्हीन्द्रियाणां प्रतिविषयग्रहणं विशेषणम्। यत्तूक्तं रागादीनामुपसंख्यानं कर्तव्यमिति, तत्र ब्रूमः—एकशेषनिर्देशात् सिद्धम्। एवं तर्हि प्रतिविषयाध्यवसायश्च प्रतिविषयाध्यवसायश्च—प्रतिविषयाध्यवसाय इति सरूपाणामेकशेषः करिष्यते। तत्रैकेन बहिरङ्गस्येन्द्रियस्य परिग्रहः, द्वितीयेनान्तरङ्गस्य प्रातिभस्येति रागादिविषयं योगिनाञ्च यद्विज्ञानं तत् संगृहीतं भवतीति व्याख्यातं प्रत्यक्षम्।

आह—अनुमानमिदानीं वक्तव्यम्। उच्यते—**त्रिविधमनुमानमाख्यातम्।** अनुमानं त्रिःप्रकारमाचार्यैर्व्याख्यातम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्च।

तत्र पूर्वमिति कारणमुच्यते। यस्य हि यत्कारणं स लोके तत्पूर्वक इत्युच्यते; [ 29a ] यथा तन्तुपूर्वकः पटो देवदत्तपूर्वको यज्ञदत्त इति। पूर्वमस्यास्तीति पूर्ववत्।

शेष इति विकारो नाम, शिष्यत इति कृत्वा। न शेषोऽग्रेऽन्यजातमित्यस्तिना अपत्यमन्येन जातं सम्भवतीत्यर्थः। शेषोऽस्यास्तीति शेषवत्। तत्र शेषवत्—यदा कारणमभ्युदितं दृष्ट्वा भविष्यत्त्वं कार्यस्य प्रतिपद्यते; यथा मेघोदये भवितव्यता वृष्टेः।

आह—नैतदस्त्युदाहरणमनेकान्तात्। न हि मेघोदयोऽवश्यं वृष्टेः कारणं भवति, बाधादिनिमित्तप्रतिबन्धसम्भवात्। उच्यते—यदा तर्हि कारणशक्तिं सहकारिशक्त्यन्तरानुगृहीतामप्रतियोगिनीं दृष्ट्वा कार्यस्य व्यक्तिः प्रतिपद्यते। तद् यथा—कुमारकं दृष्ट्वा द्वयसमापत्तिम्। आह—नैतदप्यस्त्युदाहरणमनेकान्तात। न हि द्वयसमापत्तिपूर्वक एव प्राणभृतां प्रादुर्भावः, द्रोणादीनामन्यथोत्पत्तिविशेषश्रवणात्। उच्यते—यदा तर्हि प्रभाऽनुरञ्जितमन्तरीक्षं दृष्ट्वा चन्द्रार्कयोरुदयं प्रतिपद्यते तदा शेषवत्। एतदपि नास्त्युदाहरणमनेकान्तात्। न हि प्रभाऽनुरागोऽन्तरीक्षे चन्द्रार्कनिमित्त एव भवति, किन्तर्हि दिग्दाहादिनिमित्तोऽपि। उच्यते यदा तु नदीपूरं दृष्ट्वा वृष्टिं प्रतिपद्यते तदा शेषवत्। एतदपि नास्त्युदाहरणमनेकान्तात्। नदीपूरस्य हि निमित्तमनेकविधं भवतीति हिमविलयन-सेतुभङ्ग-गजक्रीडाऽऽदि। तस्मादयुक्तमेतत्। उच्यते—यदा तर्हि पर्णं दृष्ट्वा शालूकं प्रतिपद्यते, अङ्कुरं वा दृष्ट्वा बीजमिति तदा शेषवत्। अथवा पुनरस्तु पूर्वकमेवोदाहरणम्। यत्तूक्तमनेकान्तादिति, अत्र ब्रूमः—वीतावीतसामर्थ्यात्। वीतावीताभ्यां हेतुभूताभ्यामभिप्रेतार्थसिद्धिरिति वक्ष्यामः। प्रसङ्गिधर्मान्तरनिवृत्तिमुखेन चावीतप्रयोगः। तत्र यदा प्रसङ्गिनां हिमविलयनादीनां दे[ 29b ]शकाललिङ्गैः प्रतिषेधः क्रियते तदा मुक्तसंशयं प्रतिपत्तिर्भवति। देशतस्तावद् यथा—दक्षिणापथे नास्ति हिमविलयनसम्भवः, कालतो यथा—प्रावृट्काले, लिङ्गतोऽपि यस्मात् मुद्ग-गवेधुक-श्यामाक-काष्ठ-मूत्र-शकृत्प्रभृतीनामनुपलम्भस्तथोष्म-कलुषत्वादीनामुपलम्भः। तस्मात् परिशेषतो मेघा एवाप इति, तस्मान्नानेकान्तः। एवं कृत्वा पूर्वाण्यप्युदाहरणानि उपपन्नानि भवन्ति, देशादिविचार-सामर्थ्यात्।

सामान्यतो दृष्टम्—यत्रार्थयोरव्यभिचारमुपलभ्य देशान्तरे कालान्तरे च तज्जातीययोरर्थयोरव्यभिचारं प्रतिपद्यते। तद् यथा—क्वचिद् धूमाग्निसम्बन्धं दृष्ट्वा क्वचिद् धूमान्तरेणाग्न्यन्तरस्यास्तित्वं प्रतिपद्यते।



आह—नैतदस्त्युदाहरणमविशेषप्रसङ्गात्। सर्वत्रैव ह्यनुमाने क्वचिदर्थयोरव्यभिचारमुपलभ्य अन्यत्र तज्जातीययोरर्थयोरव्यभिचारं प्रतिपद्यते। तद् यथा—क्वचित् साधनवतो मृत्पिण्डाद् घटनिष्पत्तिमुपलभ्यान्यत्र साधनवतः पिण्डान्तराद् घटान्तरनिष्पत्तिं प्रतिपद्यते। तथैकत्र नदीपूराद् वृष्टिमुपलभ्यान्यत्र नदीपूराद् वृष्ट्यन्तरमवसीयते। तथा च सति त्रयाणामविशेषप्रसङ्गः। उच्यते—यदा तर्हि सहभुवामेकस्य विशिष्टगुणमुपलभ्य शेषाणामपि तद्वत्त्वमनुमीयते तदा सामान्यतोदृष्टम्। तद् यथा—वृक्षादेकस्य फलस्य पाकमुपलभ्य शेषाणां फलान्तराणां च पाकोऽनुमीयते। आह—एतदपि नास्त्युदाहरणम्, अनेकान्तात्। न हि सर्वेषां फलानां तुल्यकालं पाको भवति, पूर्वापरकालनिष्पन्नत्वान्निमित्तभेदाच्च। उच्यते—यदा तर्हि समुद्रादेकमुदबिन्दुं प्राश्य शेषस्य लवणताऽनुमीयते, स्थाल्यां वैकं पुलाकमुपलभ्य शेषाणां पाकोऽनुमीयते तदा सामान्यतोदृष्टम्।

आह—नैतदस्त्यु[ 30a ]दाहरणमकृत्स्नसंग्रहात्। वक्ष्यत्ययमुपरिष्टादाचार्यः—'सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् (का, ६) इति। तत्रैवं प्रमाणे परिकल्प्यमाने कार्यकारणयोस्तत्सङ्घातानां च सुखदुःखमोहस्वभावोपलम्भात् तन्मात्राहङ्कारप्रधानानां समधिगमः स्यात्, न पुरुषस्य तज्जातीयार्थानुपलम्भात्। उच्यते—यदा तर्हि क्वचिद् धर्मेण धर्मान्तरस्याव्यभिचारमुपलभ्यैवं धर्मोपलम्भाद् भिन्नजातीयेऽत्यन्तानुपलब्धस्य धर्मान्तरस्य प्रतिपत्तिस्तदा सामान्यतोदृष्टम्। तद् यथा—देवदत्ते गमनात् देशान्तरप्राप्तिमुपलभ्यात्यन्तादृष्टज्योतिषां देशान्तरप्राप्तेर्गमनमनुमीयते। तथा प्रासादादीनां वृद्धिपूर्वकं दीर्घत्वमुपलभ्य ओषधिवनस्पतीनां दीर्घत्वदर्शनाद् वृद्धिरनुमीयते।

आह—नैतदस्त्युदाहरणं, पूर्वेणाविशेषात्। कार्यात् कारणस्याधिगमः शेषवदिति पूर्वमतिसृष्टं भवता। अत्रापि च देशान्तरप्राप्तिलक्षणात् कार्याद् गतिलक्षणस्य कारणस्याधिगमः। तस्माच्छेषवत्सामान्यतोदृष्टयोरभेदप्रसङ्गः। उच्यते न, अनियमात्। यत्र हि नियमः, कार्येन कारणमधिगम्यते तच्छेषवदिति। अयमस्मादभिसन्धिः। न तु तदस्ति सामान्यतोदृष्टे। कस्मात्? संघातत्वसामान्यात् पारार्थ्यसामान्यसाधनमपि दृश्यते। यथाऽऽह—अव्यभिचाराद्विशेषास्तु प्रतीताः प्रतिपादका इति साध्यसाधनसामान्ययोरपि दृश्यते; यथाऽनित्यः शब्दः कृतकत्वादिति। तत्रैवं सति नियमवादिनः प्रतिज्ञाहानिः। एतेनासिद्धविरुद्धानैकान्तिकसाधनाभासाः प्रत्युक्ताः। ते हि संशयविपर्ययज्ञानहेतुकत्वादगमका इति व्याख्यातमनुमानम्।

आह—आप्तवचनस्य किं लक्षणमिति । उच्यते—**आप्तश्रुतिराप्तवचनन्तु ।** आप्ता नाम रागादिवियुक्तस्यागृह्यमा[ 30b ]णकारणा परार्था व्याहृतिः । श्रवणं श्रुतिः, आप्ता चासौ श्रुतिः—आप्तश्रुतिः । अथवा आप्तोऽस्यास्तीत्याप्तः, अकारो मत्वर्थीयः ; तद् यथा—तुन्दो घट इति । आप्तेभ्यः श्रुतिराप्तश्रुतिः, आप्तश्रुतिश्चाप्तश्रुतिश्चाप्तश्रुतिः सरूपाणामित्येकशेषः । तत्र पूर्वेणाप्तश्रुतिग्रहणेनेदं प्रतिपादयति—अपुरुषबुद्धिपूर्वक आम्नायः स पुरुषनिःश्रेयसार्थं प्रवर्तमानो निःसंशयं प्रमाणमिति । द्वितीयेन मन्वादिनिबन्धनानां च स्मृतीनां वेदाङ्गतर्केतिहासपुराणानां शिष्टानां नानाशिल्पाभियुक्तानां चादुष्टमनसां यद् वचस्तत् प्रमाणमित्येतत् सिद्धं भवति । तुशब्दोऽवधारणार्थः । आप्तश्रुतिराप्तवचनं शब्दमात्रम् । एवं सति यदुक्तं त न्त्रा न्त री यैः—शिंशपादिशब्दानां निर्विकल्पकानुमानेऽन्तर्भाव स्त्रिलक्षणत्वादिति तदयत्नतः प्रतिक्षिप्तं भवतीति व्याख्यातानि प्रमाणानि । एतैः पूर्वोक्तं प्रमेयं यशास्वं प्रतिपत्तव्यमिति ।

आह—अस्तु तावदक्षसन्निकर्षभाजामर्थानां प्रत्यक्षेणोपलब्धिः, असन्निकर्षभाजामपि चोपलब्धसम्बन्धानामनुमानेन । ये त्वतीन्द्रिया भावा स्तेषामुभयवैलक्षण्यान्नास्ति प्रत्यक्षानुमानाभ्यामुपलब्धिः, आगमिकत्वे सर्ववादसिद्धिप्रसङ्ग इत्यतोऽत्यन्तमेवाग्रहणं प्राप्तम् । तत्र युक्तमेतावद्भिः प्रमाणैः सकलपदार्थावबोध इत्येतदयुक्तम् । उच्यते—स्यादेतदेवं यद्येकरूपमेवानुमानमधीतं स्यात्, किं तर्हि त्रिविधम् । तत्र सत्यमेव(?) पूर्ववच्छेषवतोः प्रागनुभूतसम्बन्धविषयफले, इति कृत्वा न ताभ्यामशेषपदार्थाधिगमोऽभ्युपगम्यते ।

[ सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥ ]

**सामान्यतस्तु दृष्टादतीन्द्रियाणां [1]प्रसिद्धिरनुमानात्**—यत्त्वेतत् सामान्यतोदृष्टमनुमानमेतस्मादतीन्द्रियाणामर्थानां समधिगमः प्रत्यवगन्तव्यः । [ 31a ] कथम्? यथा हि कृतकत्वानित्यत्वयोर्घटे सहभावमुपलभ्यान्यत्र शब्दादौ कृतकत्वदर्शनादनित्यत्वमनुमीयते ; एवं शकलादीनां तज्जातीयतया चन्दनादिपूर्वकत्वसिद्धेः कार्यकारणस्य सुखादिजातीयतया तत्पूर्वकत्वसिद्धिः । शयनादीनां च संघातत्वात् पारार्थ्यसिद्धेः कार्यकारणस्यापि सङ्घातत्वात् पारार्थ्यसिद्धिरिति सर्वमिष्टं संगृहीतं भवतीति । ये षा न्तु शेषवदेव सामान्यतोदृष्टं तेषां तस्य कार्यद्वारेण समधिगम-

1 Also read as, प्रतीतिरनुमानात्.



हेतुत्वात् पुरुषस्याग्रहणप्रसङ्गः । वृत्तौ कार्योपचाराददोष इति चेत्, स्यान्मतम्—यद्यपि पुरुषस्य कार्याभावस्तथाऽपि पुरुषाव्यक्तमहदहङ्कारविशेषणाग्रहणेषु साम्प्रते काले स्ववृत्तिभ्यस्तेषां ग्रहणमित्युक्तम् । कस्मात्? वृत्तिशक्तिरेषां कार्यत्वेनोपचरिता स्वमात्मानं युनक्तीति । तच्चायुक्तम् । कस्मात्? हेत्वन्तराभिधानात् । यदि वृत्त्या ग्रहणं पुरुषस्य सूपपादमभविष्यत् संहतपारार्थ्यसाहचर्यं हेतुत्वेन नावक्ष्यत् । तच्चावृत्तिभूतमित्यवश्यं शेषवत्सामान्यतोदृष्टयोरर्थान्तरभावोऽभ्युपगन्तव्यः । तस्मात् सिद्धं सामान्यतोदृष्टादतीन्द्रियाणामर्थानां समधिगमः । तस्य प्रयोगमात्रभेदाद् द्वैविध्यम्—वीतः अवीत इति । तयोर्लक्षणमामनन्ति—

यदा हेतुः स्वरूपेण साध्यसिद्धौ प्रयुज्यते ।
स वीतोऽर्थान्तराक्षेपादितरः परिशेषितः ॥

स्वरूपं हि साधनस्य द्विविधम्—साधारणमसाधारणञ्च । तत्र साधारणं साध्यसहभावि तत्प्रतिपत्तिहेतुत्वेन, यथावदाश्रीयमाणोऽर्थात्मा(?) । असाधारणं पुनः परिमाणमन्वयः सङ्घातपरार्थत्वमित्यादि । तत्र यदा हेतुः परपक्षमपेक्ष्य यथाऽर्थेन स्वरूपेण साध्यसिद्धावपदिश्यते तदा वीताख्यो भवति । यदा तु स्वसाध्यादर्थान्तरभूतानां प्रासङ्गिकाणां क्षेपम[ 31b ]पोहं कृत्वा परिशेषतः साध्यसिद्धावपदिश्यते तदाऽवीताख्यो भवति । तद् यथा—न चेत् परमाणु-पुरुषेश्वर-कर्म-दैव-काल-स्वभाव-यदृच्छाभ्यो जगदुत्पत्तिः, सम्भवति परिशेषतः प्रधानादिति तदा पुनरवीताख्यो भवति । तत्र यदा वीतो हेतुः स्वबुद्धाववहितविज्ञानस्वरूपं विज्ञानान्तरमादधानेन वक्त्रा प्रतिपाद्यादौ वाक्यभावमुपनीयते वाक्यमन्तरेणार्थस्य बुद्ध्यन्तरे संक्रामयितुमशक्यत्वात्, तदाऽवयवि वाक्यं परिकल्प्यते । तस्य पुनरवयवाः—जिज्ञासा-संशय-प्रयोजन-शक्यप्राप्ति-संशयव्युदासलक्षणाश्च व्याख्याङ्गम्, प्रतिज्ञा-हेतु-दृष्टान्तोपसंहार-निगमनानि परप्रतिपादनाङ्गमिति । तत्र ज्ञातुमिच्छा जिज्ञासा । कश्चित् कञ्चिदुपसद्याह पुरुषं ज्ञातुमिच्छामि, किमस्ति नास्तीति । कुतः संशय इति पर्यनुयुक्तः प्रत्याह—अनुपलभ्यमानस्योभयथा दृष्टत्वात् । इहानुपलभ्यमानमुभयथा दृष्टं सद्भूतमसद्भूतञ्चेति । सद्भूतं चार्केन्दुमण्डलापरभागादि । असद्भूतं च शशविषाणादि । अयमपि चात्मा नोपलभ्यते, अतः संशयः किमस्ति नास्तीति । किमस्याश्चिन्तायाः प्रयोजनमिति पृष्टो व्याचष्टे—शास्त्रात् सतत्त्वाधिगमः, ततश्च मोक्षावाप्तिः । कथमिति? यदि तावदयमात्माऽस्ति ततोऽस्याप्रकृतित्वौदासीन्य-विभुत्वादिसतत्वविज्ञानान्नैरात्म्यभ्रान्तिविपक्षभूतादपवर्गप्राप्तिरवश्यं भाविनीति । यदुक्तं व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षोऽवाप्यत इति

तच्छास्त्रमर्थवद्भवतीति। अथ नास्तीति निश्चीयते तेन सामान्यतोदृष्टादनुमानात् तद्वत् अन्येऽपि पदार्था न सन्तीति विप्रलम्भभूयिष्ठमार्षं दर्शनमपहायात्मग्रहदृष्टिविगमाल्लोकोत्तर-मवलम्बनशून्यं ध्यानविषयमुपसम्प्राप्तस्त्रैधातुकक्लेश-निरोधलक्षणमात्यन्तिकं निर्वाण-मवाप्स्य[ **32a** ]सीति। शक्यश्चायमर्थो निश्चेतुं प्रमाणत्रयपरिग्रहादिति व्यवस्थिते व्युदस्य संशयं साध्यावधारणं प्रतिज्ञा। साधनसमासवचनं हेतुः। साध्यतेऽनेनेति साधनं लिङ्गम्; समासः संक्षेपः, साधनस्य समासवचनं साधनसमासवचनम्। साधन-ग्रहणं तदाभासप्रतिषेधार्थम्। न हि तानि साधनं संशयविपर्ययहेतुत्वात्। समास-ग्रहणमवयवान्तरावकाशप्रदानार्थम्। लिङ्गनिर्देशमात्रं हेतुः। यस्तु तस्य साध्यसह-भावित्वलक्षणः प्रपञ्चः सोऽवयवान्तराणीत्युक्तं भवति। उदाहरणं त्वत्र निदर्शनं दृष्टान्तः, तस्य साधनस्य साध्येन सहभावित्वनिदर्शनं दृष्टान्तः। तद् यथा संहत्य-कारिणां परार्थत्वं दृष्टम्, यथा शयनासनरथचरणानाम्। व्यतिरेकस्त्ववीतस्य प्रसङ्गि-धर्मान्तर-निवृत्तिरूपत्वादन्तर्भूत इति न तदर्थं वैधर्म्यदृष्टान्त उच्यते। साध्यदृष्टान्तयो-रेकक्रियोपसंहार उपनयः। साध्यस्य चक्षुरादि-पारार्थ्यलक्षणस्य दृष्टान्तस्य च शयना-देरेकक्रियोपसंहारः। तत्रार्थान्तरभूतत्वात् साध्यदृष्टान्तयोरञ्जसा नैकक्रियोपपद्यते। तेनैव तस्या निदर्शनादित्यतो धर्मसामान्याद् यथेदं तथेदमित्येकक्रियोपचर्यते। यथा शयनादयः संहतत्वात् परार्थाः, एवं चक्षुरादिभिरपि परार्थैर्भवितव्यम्। योऽसौ परः स पुरुषः। तद्वशात् प्रतिज्ञाऽभ्यासो निगमनम्। हेतुदृष्टान्तोपसंहारापेक्षया पुनरभ्यास-स्तन्निगमनम्। तद् यथा—तस्मादस्ति पुरुष इत्येषामवयवानां विशिष्टार्थसमुदायो वाक्यमित्यतिदिश्यते। वाक्यमप्यनेकम्—यदा गुणीभूतं स्वार्थमर्थान्तरोपकारित्वादि-तरेण संसृज्यते तदा शास्त्रमप्येकं वाक्यमित्यवसीयते।

आह—जिज्ञासाद्यनभिधानम्, [ **32b** ]तद्व्यतिरेकेणापि स्वयमर्थगतेः, स्व-निश्चयवच्च परप्रतिपादनात्। यथा हि स्वयमुत्पद्यते निश्चेतुः प्रत्ययस्तथैवान्यः प्रत्याय्य इत्येतन्न्याय्यम्। न च स्वयमेवार्थं प्रतिपद्यमानस्य जिज्ञासादीनां तत्र व्यापारः। तस्मात् परार्थमप्येषामुपादानं न कल्प्यते। संशयवचनानर्थक्यञ्च प्रतीतार्थत्वात्। निश्चितौ हि वादिप्रतिवादिनौ स्वपक्षयोस्तयोरितरेतर-संशयपर्यनुयोगेनास्ति प्रयोजनम्। किञ्चान्यत्—प्रयोजनशक्यप्राप्त्यवचनञ्च; साधनाभ्युपगमादेव तत्प्रतीतेः। न हि महतां निष्प्रयोजना प्रवृत्तिरुपपद्यते। न चाशक्येऽर्थे हिमवत्समीकरणादिषु प्रवृत्तेः। तस्मादनर्थकमभिधानम्। तद्भावे भावादिति चेत्? स्यादेतत्—सत्सु जिज्ञासादिषु सतत्त्वाधिगमं प्रति प्रवृत्तिर्भवति, असत्सु न भवति। तस्मादेतान्यपि साधनं भविष्य-



न्तीति। एतच्चानुपपन्नम्। कस्मात्? अतिप्रसङ्गात्। सत्स्वात्मान्तःकरणेन्द्रिया-लोकविषयेषु प्रवृत्तिदर्शनात् तेषामपि साधनत्वं स्यात्। अनिष्टञ्चैतत्, तस्मात् जिज्ञासाऽऽदयोऽनर्थकाः।

प्रतिज्ञादयो दुर्विहिताः। कथम्? साध्यावधारणस्यावयवान्तरेष्वप्युपपत्तेः। यदि साध्यावधारणं प्रतिज्ञेत्युच्यते तेन साध्यस्य हेतोर्दृष्टान्तस्य वा यदवधारणं तदपि प्रतिज्ञा[त्वं] प्राप्नोति निमित्ताविशेषात्। साध्यशब्दोऽस्त्ययं सामान्यवृत्तिः, न यत्नमन्तरेण विशेषेऽवस्थापयितुं शक्यत इति। किञ्च—अहेतुलक्षणानुपपत्तिश्च साधनानुपदेशात्। यो हि साधनसमासवचनं हेतुरित्येतल्लक्षणमाचष्टे तेन प्राक् साधनमभिधेयं स्यात्, ततो वक्तव्यममुष्य समासवचनं हेतुरिति। न चैवमुक्तम्, तस्मादलक्षणमेतत्। किञ्चान्यत् —समासवचनं च विस्तरनिषेधप्रसङ्गात्। यदि हि समासग्रहणं क्रियते किं प्राप्तं योऽयमाध्यात्मिका[ **33a** ]नां भेदानां कार्यकारणात्मकानां चैकजाति-समन्वयो दृष्ट इत्येवमादिः साधनप्रपञ्चः, सोऽहेतुरित्युक्तं भवति। तस्मात् समासग्रहणमनिष्टम्। लिङ्गाभिधानाददोष इति चेत्, स्यान्मतम्—लिङ्गं हि नः साधनं तस्मान्न निर्देशः कृतः। तस्मात् स्वमति-जाड्यादिदमनिष्टमध्यारोप्यते न त्वस्मत्प्रमादादिति। एतदप्ययुक्तम्। कस्मात्? तस्य द्विधा, भिन्नं पञ्चधा साधनभावात्। तद्धि लिङ्गं वीतावीतत्वेनेष्टम्, तेन द्विधा भिन्नम्। तत्रापि वीतः पञ्चप्रभेद इत्यतः समुदायान्निष्कृष्टस्यैकस्य लिङ्गत्वम-शक्यं वक्तुमिति। किञ्चान्यत्—दृष्टान्तलक्षणायोगश्च शब्दार्थलक्षणेऽनिष्टप्रसङ्गात् तन्नि-दर्शनं दृष्टान्त इति। अत्र शब्दो वा, अर्थो वा येन साध्यसाधने निदर्श्येते स दृष्टान्तः स्यात्, अर्थो वा यत्र निदर्श्यते। किञ्चातः—तद् यदि तावत् शब्दः परिगृह्यते तत उपनयलक्षणं बाध्यते। कस्मात्? यथाऽभिधानं तथा साध्यमित्येकक्रिया युज्यत इति। अथार्थः परिगृह्यते, तेनाभिधेयस्य वाक्यानवयवत्वात् पञ्चावयवत्वविरोधः। किञ्चान्यत्—दृष्टान्तोपनयनिगमनाभेदश्च हेतुप्रतिज्ञार्थाभिधानात्। साधनत्वमेव साध्या-विनाभावित्वलक्षणं दृष्टान्तोपनययोः प्रत्याय्यते। प्रतिज्ञार्थश्च निगमनस्य नावयवान्तर-त्वं युज्यते। उच्यते—यदुच्यते स्वनिश्चयेनाङ्गभावगमनात् परप्रत्यायनार्थं जिज्ञासाद्य-नभिधानमिति। अत्र ब्रूमः—न, उक्तत्वात्। उक्तमेतत् पुरस्तात् व्याख्याऽङ्गं जिज्ञासा-ऽऽदयः। सर्वस्य चानुग्रहः कर्तव्य इत्येवमर्थञ्च शास्त्रव्याख्यानं विपश्चिद्भिः प्रत्याय्यते, न स्वार्थं सस्वदृशबुद्ध्यर्थं वा। तत्रैवं कल्प्यमाने ये व्युत्पाद्या स्तान् प्रति वैषामाकुल्यम्। अथैतदनिष्टम्। यदुक्तं सन्दिग्धविपर्यस्ताव्युत्पन्नबुद्ध्यनुग्रहार्थो हि सतां विनिश्चयः शास्त्रकथेत्यस्य व्याख्यातः। किञ्च—नियमानभ्युपगमात्। न हि वयमेषा[ **33b** ]-

मावश्यकमभिधानमाचक्ष्महे, किं तर्हि प्रतिवादी पर्यनुयुङ्क्ते किं जिज्ञासस इति। अवश्यमभिधानीयमिति केन धर्मेण किं नित्योऽनित्य इति। कुतः संशयो मूर्तत्वात्। यस्तु न पर्यनुयुङ्क्ते न तं प्रत्येते वाच्याः। क्वचिदानर्थक्यात् सर्वत्र प्रसङ्ग इति चेन्न, इतरेषामपि तत्प्रसङ्गात्। प्रतिज्ञादीनामपि तर्हि क्वचिदनभिधानमतस्तेषामपि सर्वत्रावचनं प्रसज्यते। तथा च भवतोक्तं कस्यचित् तु किञ्चित् प्रसिद्धमेव भवतीत्यन्यतरोक्तिरपि साधनं भवति शब्द इवार्थद्वयप्रतीतत्वादुभयानभिधानमिति। यदप्युक्तं निश्चितत्वात् संशयावचनमिति, असदेतत। कस्मात्? उक्तत्वात्। उक्तमेतत् सति पर्यनुयोगे तद्वचनमिति। एतेन प्रयोजनशक्यप्राप्ती प्रत्युक्ते। यो हि पर्यनुयुञ्जीत किं प्रयोजनोऽयम्, शक्यो वाऽयमर्थ इति, तं प्रति वाच्यमेतत्। यदप्युक्तं तद्भावे सिद्धिभावादिति न, अनभ्युपगमात्। न ब्रूमो यस्मात् सत्सु जिज्ञासादिषु सतत्त्वाधिगमसद्भाव स्तस्मादेतेषामवयवत्वमिति, किं तर्हि यं प्रत्येषां प्रतिपत्तावङ्गभावगमनं तं प्रत्येतानि साधनमिति। यदप्युक्तं साध्याभिधायिनः प्रतिज्ञायुतत्वाभ्युपगमात् हेतुदृष्टान्तयोरपि तत्प्रसङ्ग इति, उक्तमेतत्। कस्मात्? जिज्ञासादेः सद्भावे सति तत्प्रतीतेः। यद्यपि साध्यशब्दोऽयमविशेषेण सिद्धत्वादर्थान्तरमाचष्टे तथाऽपि यं प्रति जिज्ञासा-संशय-प्रयोजन-शक्यप्राप्तयस्तस्य व्युदस्य संशयं साध्यस्यावधारणं प्रतिज्ञा, न हेतुदृष्टान्तयो स्तदाऽस्तीत्यसदेतत्। किञ्चान्यत्—तद्भावे चाविरोधात्। यदा तु जिज्ञासादयो हेतौ दृष्टान्ते वा भवन्ति तदा किं कृतकः शब्दोऽथ न कृतकोऽथ बुद्धिर्नित्या क्षणिका वेति भवत्येव तदवधारणं प्रतिज्ञा। यदप्युक्तं साधनानुपदेशाद्धेतुलक्षणायोग इति, [ 34a ] असदेतत्। कस्मात्? लोकप्रसिद्धत्वात्। यथा साध्यत्वेनेप्सितः पक्ष इति प्रतिज्ञालक्षणमाचक्षाणो भवान् न साध्यलक्षणमाचष्टे। कस्मात्? साधनीयं साध्यमिति लोके सिद्धत्वात्, एवं साधनसमासवचनं हेतुलक्षणमाचक्षाणा वयं न साधनमाचक्ष्महे। कस्मात्? साध्यतेऽनेनेति लोके सिद्धत्वात्। उपेत्य वा, अनुमाननिर्देशात्। लिङ्गं हि नः साधनं तच्च निर्दिष्टमिति। यत्तूक्तं वीतावीतभेदे सति पञ्चधा साधनभावादिति, अत्र ब्रूमः—अयुक्तमेतत्। कस्मात्? समासग्रहणसामर्थ्यात्। अतएव समासग्रहणं क्रियते। साधनस्वरूपाभिधानमात्रं हेतुरिति यथा विज्ञायते। प्रपञ्चस्त्ववयवान्तराणीति। एतेन विस्तरप्रतिषेधप्रसङ्गः प्रत्युक्तः। कथम्? न हि समास-शब्दस्यायमर्थ इति कृत्वा। यत्पुनरेतदुक्तं शब्दार्थकल्पनेऽनिष्टप्रसङ्गाद् दृष्टान्तलक्षणायोग इति, अस्तु तावच्छब्दो दृष्टान्तः। यत्पुनरुक्तमुपनयलक्षणं बाध्यत इति, अनुपपन्नमेतत्। कस्मात्? असम्भवे सति सम्बन्ध्यन्तरे कार्यविज्ञानात्, शब्देऽसम्भवादर्थे कार्यं विज्ञास्यामः।



अथवा पुनरस्त्वर्थो दृष्टान्तः। यत्तूक्तमभिधेयस्य वाक्यानवयवत्वात् पञ्चावयवत्वविरोध इत्यर्थेऽसम्भवात् शब्दे कार्यं विज्ञास्यामः। यदप्युक्तं प्रतिज्ञाहेत्वर्थाभिधानाद् दृष्टान्तोपनयनिगमनानां नावयवान्तरत्वमिति, अयमदोषः। कस्मात्? अप्रतिज्ञानात्। न ह्येतदस्माभिः प्रतिज्ञायते, किं तर्हि प्रमेयवचनं प्रतिज्ञा। प्रमाणरूपमात्रवचनं हेतुः। तस्य प्रमेय-सहभावि-निदर्शनं दृष्टान्तः। साध्यदृष्टान्तयोर्धर्मसामान्यादेकक्रियोपसंहार उपनयः। समुदायस्य साध्यसिद्धये व्यापारनिर्देशो निगमनम्।' तस्मादयुक्तमेतत्। किञ्चान्यत्—एकस्य साधनभावपरिकल्पना, तत्परिकल्पने दोषाभावात्; [ 34b ] यथा वाक्यमेवञ्च तदर्थश्च। मुख्यौ शब्दार्थौ तयोरभिन्नार्थत्वादित्यभ्युपगमादेकमेवार्थमभागमक्रमञ्च बुद्धाववस्थाप्य श्रोत्रग्राह्यत्वानित्यत्व-कृतकत्व-प्रमेयत्वादि-लक्षणानां शक्तीनामपोद्धारात् साध्यसाधन-संशय-रूपापन्नं वक्तारो भिन्नमाचक्षते, न चैकार्थधर्मत्वात् साध्यसाधनसंशयाभिधानानामेकत्वमनुषज्यते। तथैकस्य साधनस्य साध्यधर्मतत्सहभावित्वलक्षणानां शक्तीनामभिधानं हेतुदृष्टान्तादिनाऽवयवान्तरं नः स्यात्। तत्र यदुक्तं प्रतिज्ञाहेत्वर्थाभिधानाद् दृष्टान्तोपनय-निगमनानां नावयवान्तरत्वमिति, एतदयुक्तम्। तस्मात् सूक्तं दशावयवो वीतः। तस्य पुरस्तात् प्रयोगं न्याय्यमाचार्या मन्यन्ते। किं कारणम्—अवीतलक्षणाविरोधात्। अवीतस्य हि लक्षणं परिशेषतः साध्यानुग्रहः। तत्रान्वयादिना स्वरूपेणानधिगते प्रधानलक्षणे धर्मिणि परपक्षप्रतिषेधमात्रेणोपसंहारे क्रियमाणे परिशेषलक्षणं बाध्यते। कस्मात्? इह प्रतिषेधमात्रमादावुच्यते। तेन यथा हेतुविरोधात् परमाण्वादिभ्यो न व्यक्तमुत्पद्यते, तथा हेत्वभावात् प्रधानादपि नोत्पद्यत इति शक्यं कल्पयितुम्। अत स्तद्व्यवच्छेदोऽपि चावीताद् गम्यते। तथा सति कः परिशेषः स्यात्। स्वरूपेण तु परिच्छिन्ने धर्मिणि, उपसंहारो यथावदवकल्पते। न चेत् परमाण्वादिभ्य उत्पद्यते, परिशेषतः प्रधानादेव व्यक्तमुत्पद्यते; परिशेष इति यथोक्तेभ्योऽन्वयादिभ्य इत्युक्तं भवति। तस्मात् प्राग्वीत-प्रयोग इति सिद्धं सामान्यतोदृष्टादनुमानादतीन्द्रियाणामर्थानां समधिगम इति, न कारणान्तरतोऽनुपलभ्यमानानामग्रहणात्।

यदि सामान्यतोदृष्टादनुमानात् सर्वं परोक्षमित्यधिगम्यते, प्राप्तमिदं येषामप्यर्थानां कारणान्तरतोऽनुपलब्धिस्तेषामपि तस्मादेव ग्रहणम्। [ 35a ] तद् यथा—

**[1]अतिदूरात् सामीप्यादिन्द्रियघातान् मनोऽनवस्थानात्।**
**सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च॥ ७॥**

1 This Kārikā is included in the body of the Ms.

तत्रातिदूरात् तावत्—तद् यथा प्रोड्डीनस्य शकुनेः। अतिसामीप्यात्—अञ्जन-प्रभृतीनाम्। इन्द्रियघाताद्बधिरादीनाम्। मनोऽनवस्थानाच्छकटादीनाम्। सौक्ष्म्यात् त्रुट्यादीनाम्। व्यवधानाद्धिरण्यादीनाम्। अभिभवात् सूर्यप्रकाशाद् ग्रहादीनाम्। समानाभिहारादनेकप्रदीप-प्रभानाम्, च शब्दादैश्वर्ययोगाद् देवादीनां न चार्हति भवितुम्, धर्म-सामान्यादनुपपत्तेः। तस्मादयुक्तं सर्वमतीन्द्रियमनुमानग्राह्यमिति। उच्यते—शक्यं तावत् कारणान्तरतोऽनुपलभ्यमानं किञ्चित् सामान्यतोदृष्टादनुमानादधिगन्तुम्। तद् यथा—समीपावस्थितस्य शकुनेरयत्नेन चक्षुर्ग्रहणम्। यथा यथा तु विप्रकर्षं प्रतिपद्यते प्रणिधाय चक्षुर्गृह्यते तावत्, यावत् क्रमेणादर्शनमुपसम्प्राप्तः। तत्र देशविप्रकर्षं प्रक्षीयमाणं दर्शनमुपचीयमानमवगम्यात्यन्तादर्शनमपि पश्चात् तद्धेतुकमनुमीयते। तथा नातिसमीपावस्थितस्य द्रव्यस्यास्फुट आकारोऽवधार्यते। पश्चाद् यथा यथा आरादुपसम्पद्यते तथा तथा प्रतिपद्यमानदर्शनशक्तयोऽनुमातारः कृष्णसाराञ्जन-प्रभृतीनामग्रहणमतिसामीप्यादनुमिमते। तथा गिरिसरित्समुद्रसमीपवर्तिनं श्रवणप्रतिघातिनं प्राक् शब्दमुपलभ्य पश्चात् तस्मिन्नेव देशे शब्दमगृह्णानाः श्रवणोपघातमनुमिमते।

**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्।** तस्मादपि चासिद्धमित्यनेनागमविषये सामान्यतोदृष्टस्यानवतारमाचष्टे। परोक्षमिति विषयं प्रतिनिर्दिशति, आप्तागमात् सिद्धमिति विषयिणमाह। एतदुक्तं भवति तस्मादपि सामान्यतोदृष्टादनुमानाद् यन्न सिध्यति प्रत्यक्षग्राह्यमपि स्वयमदृष्टं कार[35b]णान्तरप्रतिबन्धविषयभावमत्यन्तपरोक्षं वा स्वर्गापवर्गदेवतादि-धर्मसामान्यरहितं तदाप्तागमात् साध्यम्। सर्ववाद-सिद्धिप्रसङ्गादप्रामाण्यमिति चेत्, तद् यदि तर्ह्यागमः प्रमाणीक्रियते तेन प्रतिशास्त्रं येऽभियुक्तास्तेषां प्रामाण्यमित्यवश्यमभ्युपगन्तव्यम्। एवं सति सर्वाचार्यप्रामाण्यादनेकविकल्पविचित्रा तर्कप्रवृत्तिरित्यपरिनिश्चितत्वाद् भ्रान्तिः प्रसज्येत। तथा च सति जिज्ञासूनामपवर्गप्राप्तिः। तस्माद् भिषजेव भवता परोपदेशो नास्मानयं प्रीणाति। एतच्चायुक्तम्। कस्मात्? आप्तलक्षणस्यानवधारितत्वात्। व्युपगत-रागादि-दोषाणामसन्दिग्धमतीनामतीन्द्रियार्थदृश्वनामीश्वरमहर्षीणामाप्तत्वमाचक्ष्महे, न सर्वेषाम्। यदि वाऽन्योऽप्येवं धर्मोऽस्ति भवतु प्रमाणम्। किञ्चान्यत्—अविषये च तत्प्रामाण्यस्यादोषवत्त्वात्। यस्य खल्वपि यो विषयस्तस्य तस्मिन् विषये वचोऽन्तरेणापि साधनं प्रमाणमित्यवश्यमभ्युपगन्तव्यम्। इतरथा प्रतिशास्त्रमाचारस्थिति-नियमानामदृष्टार्थानामप्रतिपत्तिः स्यात्। एतेनाखिललिङ्गादर्थान्तरत्वं प्रत्युक्तम्। यस्मान्महताऽभिधानेन युक्तिरन्विष्यते तस्माद् युक्त्यपेक्षा लिङ्गादागमोऽर्थान्तरमिति।



आह—न, अन्वयव्यतिरेकाभ्यामधिगमहेतुत्वात्। यथा कृतकत्वादिर्धर्मोऽनित्यत्वादौ विषये दृष्टस्तदभावे चादृष्ट इत्यनित्येऽर्थे निश्चयमादधाति, एवं शब्दोऽपि स्वार्थे दृष्टोऽन्यत्र तज्जातीये न दृष्टप्रतिपत्तिर्भवति, तस्मादनुमानान्नभिन्न एवायमिति। उच्यते—चन्द्रादिष्विदानीमसाधारणविषयेषु का प्रतिपत्तिः स्यादिति। आह—अवयवापेक्षत्वाच्चन्द्रशब्दो ह्यनेकेषु वचनेषु वर्तते, जातिद्रव्यगुणक्रियासु च तदा डित्थादिशब्दः, तस्मादेवञ्जातीयकानामपि चानुमानादभेदः। [36a] उच्यते—स्वर्गादीनां तर्हि कथमनुमानत्वमिति। आह—आप्तवचोऽविसंवादसामर्थ्यात्। यथा हैरण्यक-प्रभृतीनामाप्तानां वाक्यमव्यभिचारि, एवमीश्वरमहर्षयोऽपि चाप्ताः। तस्मादेषामपि वाक्यमव्यभिचारीति शक्यमत्रापि सामान्यविषयत्वं कल्पयितुम्—एवमनुमानमेवमागम इति। उच्यते—यदुक्तमन्वयव्यतिरेकाभ्यामधिगमहेतुत्वात् शब्दोऽनुमानमिति, अत्र ब्रूमः—अप्रतिज्ञानात्। न हि वयं व्यवहारानुपातिनां वृक्षादीनामागमत्वमाचक्ष्महे, किं तर्हि स्वर्गादीनामत्यन्तपरोक्षविज्ञानानाम्। तस्मादप्रतिज्ञानादनुपालम्भोऽयमिति। उपेत्य वा, वक्त्रपेक्षत्वात्। अथवोपेत्यापि सर्वशब्दानामागमत्वमेवानुमानादर्थान्तरभावं ब्रूमः। तथा हि कृतकत्वादिति लिङ्गं चण्डालकापालिकैरपि प्रयुज्यमानं साहचर्यापेक्षं निश्चयमादधाति, न वक्तृविशेषमपेक्षते, वक्तृविशेषापेक्षस्तु शब्दः। तस्मान्न लिङ्गम्। किञ्चान्यत्—विपर्ययात्। न हि लिङ्गं देशान्तरे विपर्येति। शब्दस्य तु दृष्टो विपर्ययो ऽदृष्टः। स एव हि शब्दो देशान्तरे कालान्तरे तु स्वार्थं न प्रत्याययति, अर्थान्तरञ्च प्रशंसति। सम्बन्धानुपलब्धेरिति चेत्, स्यादेतत्—सम्बन्धान्तरं देशान्तरेऽनुपलक्षितं तस्माच्छब्दार्थविषयमिति। एतदनुपपन्नं लिङ्गवैधर्म्यात्। न हि प्रत्यक्षाभिमतस्य लिङ्गिन उपलब्धौ गवादेर्लिङ्गं नोपलभ्यते। शब्दस्तूपलभ्यमानो गवादौ नोपलभ्यते, तस्मान्न लिङ्गम्। किञ्चान्यत्—देशनियमात्। न हि लिङ्गस्य देशनियमो दृष्टः, अस्ति तु शब्दस्य देशनियमः। तद् यथा—[1]शवतिर्गतिकर्मा काम्बोजेष्वेव भाष्यते, रंहतिः प्राच्येषु। तथा दातिर्लवणार्थो दात्रमुदीच्येषु नान्यत्र, तस्मान्न शब्दो लिङ्गम्। [36b] किञ्चान्यत्—इष्टतो विनियोगात्। स्वाभाविकं लिङ्गं न हि धूमोऽग्नेरपकृष्य शक्यतेऽप्सु वायावाकाशेऽन्यत्र वा निवेशयितुम्, शब्दस्तु यत्र यत्र वक्तुरभिप्रायस्तत्र तत्र विनिवेश्यते। यथा वृद्ध्यादयः शब्दाः स्वार्थाभ्युच्चयादिषु प्रसिद्धा [2]आदैक्ष विनिवेश्यन्ते

---

1. Cf. शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवणार्थे प्राच्येषु दात्रमुदीच्येषु, *Mahābhāṣya* I. I. I. on the *Vārttika* सर्वे देशान्तरे.

2. Cf. वृद्धिरादैच्, Pā. I. I. I.

तस्मान्न ते लिङ्गम्। सर्वाभिधानशक्तित्वात् शब्दस्यादोष इति चेत्, स्यान्मतम्—सर्वाभिधानशक्तिः शब्दः सर्वाभिधेयशक्तिश्चार्थस्तयोः पुरुषव्यापारेण शक्त्यवच्छेदः क्रियते। कथम्—अयमेव शब्दोऽस्यार्थस्य प्रत्यायको भवतु। अयमेव चार्थोऽनेन शब्देनाभिधीयताम्। एतावति पुरुषव्यापारः तस्माच्छब्दस्य स्वाभाविकः सम्बन्धो वक्त्रपेक्षया व्यज्यत इति। एतदप्यनुपपन्नम्। कस्मात्? सुतरामनुमानादर्थान्तरत्वप्रसङ्गात्। एवमपि कल्पयित्वाऽनुमानात् सुतरां शब्दस्यार्थान्तरत्वमापद्यते। कस्मात्? न हि यथा वक्त्रपेक्षया सर्वार्थस्य सतः शब्दस्य शक्त्यवच्छेदस्तथा सर्वार्थं लिङ्गं वक्त्रपेक्षयाऽर्थान्तरादवच्छिद्यते। यथा चैकः शब्दो जगत्येवमुदितः पुरुषविनियोगापेक्षः सर्वमर्थमभिधातुं समर्थस्तथैकं लिङ्गं कयाचिद् युक्त्या सर्वार्थप्रत्यायनसमर्थम्। तस्मान्न शब्दो लिङ्गम्। यत्पुनरेतदुक्तं चन्द्रादीनामवयवापेक्षं सामान्यमभ्युपगम्यते, तदयुक्तमसाधारणत्वात्। अनुमानाभावे शब्दप्रसिद्धोऽर्थ इति व्याघातः। किञ्चान्यत्—जात्यादिसाध्यत्वात्। जातिगुणद्रव्यक्रियाणां च परस्परतोऽर्थान्तरत्वं समुदायश्च साध्यः। तस्मादयुक्तमेषां तदपेक्षया सामान्यविषयत्वम्। यदप्युक्तमाप्तवादाविसंवादेन सामान्यात् स्वर्गादिशब्दानामनुमानत्वमिति। अत्र ब्रूमः, एतदप्यनुपपन्नम्। कस्मात्? प्रमाणविषयत्वात्। [37a] सत्यमस्त्येषां सामान्यपरिकल्पना, सा तु प्रमाणविषया न तु प्रमेयविषया। प्रमेयं तु सामान्यमनुमानस्येत्ययमभ्युपगमो वः, तच्चासाधारणत्वात् स्वर्गादीनां प्रतिषिद्धम्। तस्मात् त्यज्यतामियमाशङ्का, अनुमानमेवागम इति।

अन्यः पुनरनुमानागमयोरभेदप्रतिज्ञ इदमाह—स्वर्गादयः शब्दा न प्रमाणम्। कस्मात्? प्रमाणान्तरेण तदर्थानुपलब्धेः। यस्य हि शब्दस्यार्थः प्रत्यक्षतोऽनुमानतो वा नोपलभ्यते स न प्रमाणम्। इतरस्तु प्रमाणम्। तद् यथा—नद्यास्तीरे पक्वमाम्रवणम्, पथि गुडशकटं विपर्यस्तमिति। न च स्वर्गादिशब्दानामर्थः प्रमाणान्तरेणोपलभ्यते। तस्माद् यथा विभुरात्मा सर्वत्र सुखादिसम्भवादित्येवमादयो बौद्धं प्रति धर्म्यसिद्धादयो यथाऽर्थास्तथा वेदशब्दा अभिप्रायेणेति। एतत्तु न युक्तरूपम्। कस्मात्? अन्यायेन सर्वशब्दापवादात्। का तत्र युक्तिर्यदस्मदादिभिरनुपलभ्यमानार्थं प्रमाणभूतानामपि वाक्यमयथार्थं स्यात्। सर्वेण चावश्यं कश्चिदाप्तोऽभ्युपगन्तव्यः। अतोऽयं तत्रापि समानः प्रसङ्गः। न च प्रमाणं स्वार्थसिद्धये प्रमाणान्तरमपेक्षते। तत्र यदि शब्दस्य प्रमाणान्तरापेक्षं यथाऽर्थत्वमाश्रीयते, तेन न केवलं स्वर्गादयः किन्तर्हि शब्दा एवाप्रमाणमिति प्राप्तम्। अनुमानस्य च प्रमाणान्तरनिरपेक्षस्य गमकत्वानभ्युपगमादागमस्य ततोऽर्थान्तरं सुतरां प्रसज्येत। तस्माद् युक्त्यागमविरोधिन एवंविधा नास्तिकवादाः



श्रेयोऽर्थिभिर्दूरादपोह्या इति स्थितमेतत्। अनुमानादसिद्धं वस्तु यत् तदाप्तागमात् साध्यमिति। एवमस्य त्रिविधस्य प्रमाणस्यैन्द्रियक-कारणान्तरतोऽनुपलभ्यमानञ्च प्रमेयं व्याख्यातम्, एतस्मात् तु यदन्यत् तदसदिति प्रत्यवगन्तव्यम्।

आह—यद्येवं प्रधानस्यासत्त्वप्रसङ्गः, अनुपलब्धौ कारणान्तरत्वानुपलब्धेः। त[37b]द्धि प्रत्ययाविषयत्वे सत्यतिदूरादिभिरनुपलब्धकारणै र्नोपलभ्यते। तन्न तावदतिदूरात् सामीप्याद् व्यवधानाच्चास्याग्रहणम्। कस्मात्? विभुत्वात्। नेन्द्रियघातात्—अविकलेन्द्रियैरग्रहणात्। न मनोऽनवस्थानात्—अवस्थितमनोभिरग्रहणात्। न सौक्ष्म्यात्—शशविषाणादीनां सत्त्वप्रसङ्गात्। नाभिभवात्—असम्भवात्। न समानाभिहारात्—एकत्वात्। तस्मात् कारणान्तराभावतोऽनुपलभ्यमानस्यासत्त्वमिच्छतः प्रधानस्यापि शशविषाणवदसत्त्वप्रसङ्गः। अथैतन्नेष्यते। कारणान्तरं तर्ह्यनुपलब्धौ वक्तव्यमिति। उच्यते—यत्तावदुक्तमनुपलब्धौ कारणान्तरानुपपत्तिः प्रधानस्यासत्त्वप्रसङ्ग इति। अतस्तु—

[ सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धिः।
महदादि तच्च कार्यं प्रकृति-विरूपं सरूपञ्च ॥ ८ ॥ ]

**सौक्ष्म्यात् तदनुपलब्धिर्नाभावात्।** यत्तूक्तं शशविषाणादीनामपि सत्त्वप्रसङ्ग इति, तदयुक्तम्। कस्मात्? साधनोपपत्तेः। अस्ति हि प्रधानस्य सौक्ष्म्यात् तदनुपलब्धौ साधनं न शशविषाणादीनाम्। किन्तदुच्यते—**कार्यतस्तदुपलब्धिः**[1]। प्रधानस्य हि कार्यत उपलब्धिरित्येतदुपरिष्टात् प्रतिपादयिष्यामः, न तु शशविषाणादीनां कार्यमस्ति तस्माद् विषमोऽयमुपन्यासः।

आह—एवमपि प्रतिज्ञाऽन्तरानर्थक्यमेकेन कृतत्वात्, सौक्ष्म्यात् तदनुपलब्धिरित्युक्ते गम्यत एतन्नाभावादिति। तस्मात् तद्वचनमनर्थकमिति। उच्यते—न वीतावीतपरिग्रहार्थत्वात्। एवं सिद्धे यत् प्रतिज्ञाद्वयं करोति, तज्ज्ञापयत्याचार्यः वीतावीताभ्यामभिप्रेतार्थसिद्धिः प्राक् तत्-सौक्ष्म्यातिशयात् तदनुपलब्धिरित्याचक्षाणः प्रतिपादयति पुरस्ताद्वीतः प्रयोक्तव्य इति। एकस्मिंश्च विषये प्रयुञ्जानः समुच्चयेन सिद्धिं द्योतयति। किं सिद्धं भवति, यदुक्तं तन्त्रान्तरीयैः—'न पृथक्प्रतिपत्तिहेतू वीतावीतौ' इति। तदिष्टमेव संगृहीतं भव[38a]ति। तत्र वीतस्य प्रतिज्ञा—सौक्ष्म्यात् तदनुपलब्धिः, तस्य

1 Also read as, कार्यतस्तदुपलब्धेः.

चावीतस्य प्रसङ्गिधर्मान्तरनिवृत्तिरूपेण नाभावात् हेतुरुभययोगी। कथम्? यस्य प्रत्यक्षतोऽनुपलभ्यमानस्य कार्यतस्तदुपलब्धिस्तस्य सौक्ष्म्यात् तदुपलब्धिरिति।

आह—किं पुनस्तत् कार्यं यद्वान् प्रधानस्यास्तित्वे लिङ्गमाचष्ट इति। उच्यते—**महदादि तच्च कार्यं प्रकृतिविरूपं सरूपञ्च।** तद्धि महदहङ्कारेन्द्रियविशेषाविशेषलक्षणं कार्यं प्रधाने न विसदृशम्। सदृशञ्चेत्युपरिष्टात् प्रवेदयिष्यामः।

आह—प्रस्तावाभावादयुक्तमेतत्। किं पुनरधिकृत्येदमुच्यते—प्रकृतिविरूपं सरूपञ्च महदादिकार्यमिति। व्यक्ताव्यक्तज्ञविज्ञानात् मोक्षोऽवाप्यत इत्येतत् प्रकृतम्। एतानि च परस्परवैधर्म्यसाधर्म्यप्रतिपत्तिमन्तरेण न शक्यं विज्ञातुमित्येवमर्थं प्रस्तूयते। तस्मात् नाकस्मिको वैरूप्यसारूप्योपन्यास इति।

इति श्रीयुक्तिदीपिकायां सप्ततिपद्धतौ द्वितीयमाह्निकम्।

[1]आह—आस्तां तावद् वैरूप्यसारूप्यचिन्ता। कार्यमिदमेव तावन्महदादि परीक्षिष्यामहे, किं प्रागुत्पत्तेरस्ति नास्तीति। कुतः संशय इति चेत्, स्यान्मतम्—असङ्गतार्थं प्रकरणान्तरमुपक्षिप्यते भवता। न चाविद्यमानसम्बन्धस्य प्रकारान्तरेणाभिधीयमानस्य निर्णीतिं साध्वीमाचार्या मन्यन्ते, अवकाशासम्भवादिति। उच्यते—अस्ति संशयावकाशः। कस्मात्—आचार्यविप्रतिपत्तेः। प्रागुत्पत्तेः कार्यमसदित्याचार्याः कणादाक्षपादप्रभृतयो मन्यन्ते। सदसदिति बौद्धाः। नैव सन्नासदित्यन्ये। तस्मादुपपन्नः संशयः। तत्रेदानीं भवतः का प्रतिपत्तिरित्युच्यते—नाविद्यमानस्य महदादेर्विकारस्य प्रधानादाविर्भाव इति प्रतिजानीमहे। कस्मात्—सन्निवेशविशेषमात्राभ्यु[38b]पगमात्। न हि नः कारणादर्थान्तरभूतं कार्यमुत्पद्यते इत्यभ्युपगमः, किं तर्हि विश्वात्मकानां सत्त्वरजस्तमसामपगतविशेषाविशेषाः स(त?)न्मात्रलक्षणोपचयाः प्रतिनिवृत्तपरिणामव्यापाराः परमविभागमुपसंप्राप्ताः सूक्ष्माः शक्तयः। तासामधिकारसामर्थ्यादुपजातपरिणामव्यापाराणां स(त?)न्मात्रानुक्रमेण प्रचयमुपसंपद्यमानानां सन्निवेशविशेषमात्रं व्यक्तम्। एतस्यां कल्पनायामाप्तत उत्पत्तौ कः प्रसङ्गः इति। एतेनैव बाह्यानां तन्त्वादिकार्याणां पटादीनां सन्निवेशविशेषमात्रत्वादसत उत्पत्तिः प्रतिषिद्धा बोद्धव्या।

आह—अविद्यमानमेतत्। कस्मात्—सिद्धेनार्थान्तरसिद्धेः। यदि हि सन्निवेशविशेषमात्रत्वं कार्यस्य सिद्धं स्यात् तत एतद् युज्यते वक्तुम्, तदभ्युपगमादसदुत्पत्तेरप्रसङ्ग इति। तत् त्वसिद्धम्, द्रव्यान्तरभूतस्यावयविनो निष्पत्तिप्रतिज्ञानात्। तस्मात् काकविषाणाच्छशविषाणसिद्धिवदयुक्तं सन्निवेशमात्राभ्युपगमात् सत्कार्यसिद्धिरिति।

इतश्चासत् कार्यमग्रहणात्। इह श्रोत्रादीनां विषयभूतस्य तत्सन्निधानादवश्यमेव ग्रहणेन भवितव्यम्। यदि च प्रागुत्पत्तेः सन् कार्यं स्यात् तदपि श्रोत्रादिसन्निधानाद्

1 The Ms. begins this Āhnika with ॐ नमःशिवाय।

गृह्यते, न तु गृह्यते ; तस्मादसत् कार्यम्। अनुपलब्धिकारणसद्भावादिति चेत्—तत्रैतत् स्यात्। अस्ति प्रागुत्पत्तेः कार्यस्यानुपलब्धिकारणं तस्मादस्य सतोऽप्यग्रहणं भवति। उत्तरकालं तद्विगमाद्ग्रहणमिति, एतच्चानुपपन्नम्। कस्मात्—असम्भवात्। तद्धि प्रत्यक्षाविषयत्वे सत्यतिदूरादिभिरनुपलब्धिकारणैर्नोपलभ्यते। न चैषां तत्र सम्भवः तस्मादसदेतत्। किञ्चान्यत्— कारणानुपलब्धिप्रसङ्गात्। [ 39a ]अनुपलब्धिकारण-सद्भावात् कार्यस्याग्रहणमिच्छतः कारणाग्रहणप्रसङ्गः। कस्मात्—अभिन्नदेशत्वात्, एकेन्द्रियग्राह्यत्वात् स्थूलत्वाच्च। तत् त्वनिष्टम्। तस्मादयुक्तमनुपलब्धिकारणसद्भावात् सतः कार्यस्याग्रहणमिति। प्रमाणान्तर-निवृत्तिप्रसङ्गादयुक्तमिति चेत्, स्यादेतत्—यदि तर्हि प्रत्यक्षविषयत्वमेवास्ति ततोऽन्यत् नास्तीत्येतदुपगम्यते। तेनातीन्द्रियविषय-स्यानुमानस्य निवृत्तिप्रसङ्गः। अनिष्टश्चैतत्। तस्मान्नानुपलब्धेरसत् कार्यमिति। एतदप्ययुक्तम्। कस्मात्—क्रियागुणव्यपदेशासम्भवात्। यद्धि प्रत्यक्षतो नोपलभ्यते तत् क्रियया‌ऽस्तीति संसूच्यते। यथा हर्म्यावस्थितानां गुणोद्वहनाद् वायुः। गुणेन यथा—मालती लता। गन्धेन व्यपदेशेन वा कार्यादिना, यथेन्द्रियाणि। न प्रागुत्पत्तेः कार्यस्य क्रियागुण-व्यपदेशसम्भव स्तस्मादसत् कार्यम्।

कुतश्च असत् कार्यम्— कर्तृप्रयाससाफल्यात्। इह प्राग्व्यापारोपक्रमात् कर्तार-स्तस्मात् फलमुपलिप्समानाः कार्यविशेषा नियतसामर्थ्यं साधनमुपादाय व्याप्रियन्ते, तच्चेत् प्रागपि व्यापारात् स्यात् तदर्थस्य परिस्पन्दस्यानर्थक्यं प्राप्तम्। अनिष्टश्चैतत्। तस्मात् कर्तृप्रयाससाफल्यादसत् कार्यम्। परिणामाद्युपपत्तेर्न दोष इति चेत्, स्यान्मतम्—कारणस्य परिणामव्यूह-संश्लेष-व्यक्ति-प्रचयलक्षणान् धर्मान् यस्मात् कर्त्रादीनि कुर्वन्ति नानर्थकानि स्युः। सत्त्वं कार्यस्य न निरुध्यते। क एवं सति दोषः स्यादिति। उच्यते – न शक्यमेवं कल्पयितुम्। कस्मात्? मार्गान्तरानुपपत्तेः, परिणामो हि नामावस्थितस्य धर्मान्तरनिवृत्तिः धर्मान्तरप्रवृत्तिश्च। तत्र सतो धर्मान्तरस्य निरोधा-भ्युपगमादसतश्चोत्पत्ति-प्रतिज्ञानाच्च नेदं मार्गान्तरमारभ्यते ; एवं व्यूहादयोऽप्युपसंहर्तव्याः। तस्मात् परि[ 39b ]णामादिभिरभावश्च(?) कर्त्रादीनामर्थवत्त्वादसत् कार्यं कुतश्च न सत् कार्यम्। आरम्भोपरमयोराद्यन्ताविशेषप्रसङ्गात् यदि सत् कार्यं स्यात् तेन यः क्रियार्थः साधनानामादौ परिस्पन्दः सोऽन्तेऽपि स्यात्, वा योऽन्ते विरामः स आदावपि स्यात्। कस्मात्? सदविशेषात्। न तु तदस्ति तस्मादसत् कार्यम्।

कुतश्चासत् कार्यम्—उत्पत्तिधर्मस्याद्यन्तयोरविशेषप्रसङ्गात्। यदि सत् कार्यं स्यात् तेन यथा निष्पन्नस्योत्पत्तिधर्मेणाभिसम्बन्धः तथाऽऽदावपि स्यात्। यथैवादावभि-



सम्बन्धस्तथाऽन्तेऽपि स्यात। दृष्टश्चाभिसम्बन्धो नाभिसम्बन्धश्चाद्यन्तयोस्तस्मादसत् कार्यम्।

कुतश्चासत् कार्यम्—जन्मसच्छब्दयोर्विरोधात्। इह जन्मशब्दः प्रागभूत-स्यार्थस्य भावक्रममाह, सच्छब्दस्तु क्रियान्तरहेतुत्वमाह। यदि सतो जन्म स्यादैकार्थ्य-मनयोः स्यात्। न त्वेतदस्ति, तस्मादयुक्तं सज्जायत इति।

उच्यते – यदुक्तं द्रव्यान्तरभूतस्यावयविनो निष्पत्तिः स्यात तेन यथा तन्तुकलापे पट स्तत्रैव पटान्तरमाहितं भेदेनोपलभ्यते तथैवोपलभ्यते(?)। न तूपलभ्यते, तस्मान्न द्रव्यान्तरम्। समवायादग्रहणमिति चेत्, स्यादेतत्—संयोगिनोर्द्रव्ययोः सत्याधाराधेय-भावे भेदेन ग्रहणं भवति। समवायलक्षणा तु प्राप्तिस्तन्तुपटयोः। तस्मान्नास्ति भेदेन ग्रहणमिति। तच्चानुपपन्नम्। कस्मात्? असिद्धत्वात्। सिद्धे सत्यर्थान्तरभावे अवयविनस्तत्प्राप्तौ च समवाये सर्वमेतत् स्यात्। तत् त्वसिद्धमुभयम्। तस्माद-युक्तमेतत्। किञ्चान्यत्—दृष्टान्ताभावात्। महापरिमाणं द्रव्यमन्यत्राहितं समवायात् भेदेन नोपलभ्यते इत्येतस्मिन्नर्थे पर्यनुयुक्तस्य कस्ते दृष्टान्तः। न चास्त्यनुदाहृतो वादः। व्याप्तेरग्रहणमिति चेत्, स्यान्मतम्—अकार्यकारणभूतं सत्यपि सम्बन्धे न [ 40a ]द्रव्यान्तरं व्यश्नुत इत्यतो भेदेन गृह्यते। तन्तुपटयोस्तु कार्यकारणभूतत्वात् व्याप्तिस्तस्मान्नास्ति भेदेन ग्रहणमिति। एतदप्ययुक्तम्। कस्मात्? साध्यत्वात्। सत्यर्थान्तरभावेऽवयवि-द्रव्यान्तरवत्कार्यकारणभावः साध्यः समवायश्च। अत इयं व्याप्तिः स्यात्। सा चाप्रसिद्धा, इत्यतो न सम्यगेतत्। वेमादिवदिति चेत्, स्यादेतत्—तद् यथा सत्यर्थान्तरभावे वेमादयोऽवयविनः कारणम्, एवं तन्तवोऽपि। एतदनुपपन्नम्। कस्मात्? अनभ्युपगमात्। करणं वेमादयः पटस्य न कारणमित्यभ्युपगमो वः, तस्माद्विषमोऽयं दृष्टान्तः। किञ्चान्यत्—तद्वद्व्याप्तिप्रसङ्गात्। वेमादिवदर्थान्तरं पटास्तन्तव इत्येवं ब्रुवतस्तद्वद्व्याप्तिप्रसङ्गः। किञ्चान्यत्— स्पर्श-क्रिया-मूर्त्ति-गुरुत्वान्तर-वतस्तद्वति प्रतीघातादिति। स्पर्शान्तरवति प्रतीघातो दृष्टः। तद् यथा घटस्याश्मनि। स्पर्शान्तरवांश्च ते पटस्तन्तुभ्य इत्यतोऽस्य तद्व्यापित्वमयुक्तम्। एवञ्च क्रियादयो वक्तव्याः। तस्माद् युक्तमेतद् भेदानां ग्रहणान्नावयवी द्रव्यान्तरमिति। इतश्च नावयवी द्रव्यान्तरं कृत्स्नैकदेशवृत्त्यनुपपत्तेः। न ह्यवयवेषु वर्तमानः कृत्स्नेषु वा वर्तते, प्रत्यवयवं वा। किञ्चातः, तन्न तावत् कृत्स्नेषु वर्तते। कस्मात्? एकदेशग्रहणे ग्रहणा-भावप्रसङ्गात्। यदनेकेषु वर्तते तस्य कृत्स्नाधारग्रहणे सति ग्रहणं स्पष्टम्। तत्

यथा द्वित्वादीनाम्। एवञ्च सति विषाणादिग्रहणे गोग्रहणप्रसङ्गः। किञ्चावयवानवस्थाप्रसङ्गात्। स ह्यवयवान् व्याप्नुवंस्तद्व्यतिरेकेणावयवान्तराभावात् केन व्याप्नुयात्। अवयवान्तराभ्युपगमे चानवस्थाप्रसङ्गः, कृत्स्नैकदेशवृत्तिप्रसङ्गश्च समानः। तस्मान्न सर्वेषु परिसमाप्यते। न प्रत्येकमनेकप्रसङ्गादनेकाधारपरिसमाप्तं ह्यनेकं रूपादिदृष्ट[ 40b ]मिति। किञ्चान्यत्—शास्त्रहानेः। प्रत्यवयवं परिसमाप्तोऽवयवीत्येतदिच्छतो मूर्तिमताऽवयवेन समानदेशः स्यात्। ततश्च य च्छा स्त्रं 'मूर्तिमतामसमानदेशत्वम्' इति तस्य व्याघातोऽवयवपरिमाणञ्च प्राप्नोति, महत्त्वादिपरिसमाप्तत्वादेकद्रव्यं न च प्राप्नोति। ततश्च य च्छा स्त्रं 'द्रव्यमनेकद्रव्यमद्रव्यं वा' तस्य हानिरेतावती वृत्तिर्भवन्ती भवेत् सर्वथा च दोषः। तस्मान्नावयवी द्रव्यान्तरम्। अर्थान्तरावस्थानेऽर्थान्तरोत्पत्ति-विनाशदर्शनादन्यत्वमिति चेत्, स्यादेतत्—विद्यमानेषु तन्तुषु पटो न भवति संयोगलक्षणस्य कारणान्तरस्यानुत्पत्तेः। संयोगोत्तरकालं तु भवति। कारणसामग्र्याद् विद्यमानेष्वेव च तन्तुषु विनाशमुपयाति विभागादर्थान्तरावस्थाने चार्थान्तरोत्पत्तिविनाशौ दृष्टौ। तद् यथा—हिमवद्वस्थाने दवाग्नेः। तस्मादर्थान्तरं पटस्तन्तुभ्य इति। एतदप्ययुक्तम्। कस्मात्? साध्यत्वात्। साध्यं तावदेतत् किमर्थान्तरमुत्पद्यते विनश्यति वा, आहोस्वित् तन्तुष्वेव समवस्थानविशेषापेक्षस्य पटाभिधानस्य प्रवृत्तिनिवृत्ती सेनावनवद् भवत स्तस्मादेतदप्यवयविनो द्रव्यान्तरभावे लिङ्गं तत्पुरुषबहुव्रीहिद्वन्द्वसमासे। स्यान्मतम्, इहार्थान्तरत्वे सति तत्पुरुषो दृष्टः। तद् यथा—राज्ञः पुरुष इति, बहुव्रीहिश्च चित्रगुः शबलगुः, द्वन्द्वश्च प्लक्षन्यग्रोधाविति। अस्ति चेहापि तत्पुरुष स्तन्तूनां पटः, बहुव्रीहिश्च दृढतन्तुः शुक्लतन्तुः, द्वन्द्वश्च तन्तुपटाविति। तस्माच्चावयवोऽर्थान्तरम्। एतच्चायुक्तम्। कस्मात्? अनेकान्तात्। अनन्यत्वेऽपि तत्पुरुषो दृष्टः। तद् यथा—सेनागजः, काननवृक्ष इति, बहुव्रीहिश्च वीरपुरुषा मत्तगजसेना इति। द्वन्द्वस्तु यदि स्यात् सत्यमेवावयवान्तरमवयवी स्यात्, न तु कश्चित् पटावस्थायामेव...................[ 41a ] पूरयिष्याम इति प्रकृतमेवैतत्। अनैकान्तिकत्वं समानं निष्पत्त्यनन्तरं द्रव्यस्यास्तित्वाभ्युपगमाद्गुणवतो द्रव्यस्य गुणारम्भः कर्मगुणा अगुणाः इति व च ना दुत्पन्नमात्रं द्रव्यं निष्क्रियं निर्गुणमवतिष्ठत इति वः पक्षः। न चास्य तथाभूतस्य लिङ्गमस्ति, अथ चास्तित्वं भवद्भिरभ्युपगम्यते। सिद्धेर्ग्रहणसद्भाव इति चेन्न सर्वविवादसिद्धिप्रसङ्गात्। दृष्टान्तविरुद्धमर्थं प्रतिज्ञाय प्रतिविध्यमानेन सिद्धबुद्धिविषयता स्मर्तव्येत्येतस्यां कल्पनायां सर्ववादसिद्धिप्रसङ्गः स्यात्। किञ्चान्यत्—प्रतिपक्षे समानत्वात्। अस्मत्पक्षेऽपि तर्हि भ ग व त्-



प ञ्च शि खा दी नां प्रत्यक्षत्वात् सत्कार्यमभ्युपगन्तव्यम्। तस्मान्न क्रियागुणव्यपदेशासम्भवादसत् कार्यम्। यत्पुनरेतदुक्तं कर्तृप्रयास-साफल्यादसत्कार्यमिति, अत्र ब्रूमः—एतदप्ययुक्तम्। कस्मात्—

[ असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम्॥ ९॥ ]

**असदकरणात्।** यद्युभयपक्षप्रसिद्धस्यासतः क्रियायोगः स्यात्, अत एतद् युज्यते वक्तुम्—कार्ये सति कर्तुः प्रयासोऽनर्थक इति। तत् त्वसतः करणमनुपपन्नम्। तस्मादयुक्तमेतत्। हेत्वनभिधानादसिद्धिरिति चेत्, स्यादेतत्—यथा निष्पन्नत्वात् मध्वादीनां धारणसमर्थो घटो न क्रियत इत्ययमपदिष्टो हेतुरस्माभिः। एवमित्थं कार्यस्य सतः कारणं नोपपन्नमिति नोक्तं भवता, तस्मादसिद्धिरिति। एतच्चानुपपन्नम्। कस्मात्? सत्यसति वा सम्बन्धे दोषप्रसङ्गात्। तर्हि क्रियमाणं सति वा सम्बन्धे कारकैः क्रियते, सति वा सम्बन्धश्चास्य भवन् प्रवृत्तिकाले वा कारकाणां स्यात् निवृत्तिकाले वा। किञ्चातः तन्न तावत् प्रवृत्तिकाले सम्बन्धो युक्तः। कस्मात्? अद्रव्यत्वात्। प्रवृत्तिकाले कर्त्रादीनां क्रियागुणव्यपदेशाभावादवस्तुभूत-शशविषाणस्थानीयं वः कार्यम्, न चास्ति तथा भू[ 41b ]तस्य वस्तुभूतेन सम्बन्धः। अथ निवृत्तिकालेऽभिसम्बध्यते। यदुक्तं सतो निष्पन्नत्वात् क्रियाऽनुत्पत्तिरिति तस्य व्याघातः। अथ मतमसत्यपि सम्बन्धे निष्पत्तिर्भवतीति, तेन कारकव्यापारवैयर्थ्यप्रसङ्गः; प्रागपि च कारकोपादानात् कार्यनिष्पत्तिप्रसङ्ग इति। उक्तञ्च—

[1]"असत्त्वान्नास्ति सम्बन्धः कारकैः सत्त्वसङ्गिभिः।
असम्बन्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः"॥ इति।

आह—ननु च मध्यमे काले कर्त्रादिभिः कार्यं क्रियते। कः पुनरसौ मध्यमः काल इति। आह—आरम्भाय प्रसृता यस्मिन् काले भवन्ति कर्तारः कार्यस्य निष्णातास्तं मध्यमं कालमिच्छन्तीति। यदा हेतवः प्रवृत्ता भवन्त्युद्दिश्य कार्यम्। न च तावत् नैमित्तिकस्यात्मलाभः संवर्तते स मध्यमः कालः, तस्मिन् क्रियते कारकैः कार्यमिति। उच्यते—न, अवस्थाऽन्तरानुपपत्तेः। प्राङ् निष्पत्तेरसत्ता, निष्पन्नस्य सत्तेत्यवस्थाद्वयम्। सदसद्रूपा च सत्ता नास्ति यो मध्यमः स्यात्। अतो न युक्तमेतदिति। किञ्चान्यत्—पूर्वदोषापरिहारादुद्दिश्य कार्यं तस्यात्मनो लाभात् केन सह सम्बन्ध इति। अत्राप्ययं

1 Quoted by Vācaspati with the remark, यथाऽऽहुः सांख्यवृद्धाः—TK. on Kārikā 9.

पर्यनुयोगो नैव निवर्तत इति। तस्माच्चित्रमपि वाक्यं प्रसार्य न किञ्चित् परिहृतं भवता। तस्मादयुक्तमेतत्। सत्यसति वा सम्बन्धे दोषप्रसङ्गादसन्न क्रियत इति। यस्य पुनः सत् कार्यं तस्य दोषो नास्ति। कस्मात्? **उपादानग्रहणात्।** उपादानमिति कारणं तन्त्वाद्याचक्ष्महे, तद्धि तस्य कारकैर्गृह्यते—अभिसम्बध्यत इत्यर्थः। तस्माच्च नार्थान्तरं कार्यमित्यतः कारकेणाभिसम्बद्धानां कारकाणां कार्येणैव सम्बन्धो भवतीत्यदोषः।

आह—ननु च यस्यापि सत् कार्यं तस्योपादानादर्थान्तरं तत्कार्यं स्यात्। कस्मात्? कार्यार्थिभिरुपादानात्। यद् यदर्थमुपादीयते तत् तस्मिन् न सत्, यथा वेमादिषु पट इति। [ 42a ] उच्यते—न, अवयविप्रतिषेधात्। प्रतिषिद्धस्तावदवयवी द्रव्यान्तरभूतस्तस्मादनुपपन्नार्थमेतत्। किञ्चान्यत्—**सर्वसम्भवाभावात्।** उपादानसामान्याद्वेमादिवदर्थान्तरं पटस्तन्तुभ्य इति ब्रुवतोऽर्थान्तरसामान्यात् तन्तुवत् सर्वस्मात् कारणात् कार्यस्य सम्भवः स्यात्। न त्वेवमस्ति, तस्मात् सर्वसम्भवाभावादसम्यगेतत्। किञ्चान्यत्—जातिभेदप्रसङ्गादर्थान्तरारम्भ-प्रसङ्गाच्चोपादानसामान्यात् वेमादिवदर्थान्तरं पटस्तन्तुभ्य इति ब्रुवतो यथा वेमादिभ्यो भिन्नजातीयो भिन्नदेशश्च, तथाऽवस्थिते पटे वेमादयः पटान्तरं कुर्वन्ति, तथा ह्यवस्थिते पटे तन्तवोऽपि पटान्तरमारभेरन्। न चैतदिष्टम्। न तर्ह्युपादानसामान्याद् वेमादिवत् तन्तुभ्यः पटस्यार्थान्तरत्वम्। यत् पुनरेतदुक्तं यद् यदर्थमुपादीयते न तत् तत्रास्तीति। अत्र ब्रूमः—अयुक्तमेतत्। कस्मात्? आधाराधेयभावानभ्युपगमात्। असकृदुक्तमस्माभिर्न तन्तुषु पटो नाम कश्चिदस्ति, किं तर्हि तन्तव एव पटः। तत्तु सन्मार्गविद्वेषाद् भवता न गृह्यते। किञ्चान्यत्—अनेकान्तात्। उपेत्य वा ब्रूमः—कथं तावत् तिलास्तैलार्थमुपादीयन्ते भवति चात्र तैलम्, मृत्तिका रसार्थमुपादीयते भवति चास्यां रसः, गोधुक् पयोऽर्थं गामादत्ते भवति च तस्यां क्षीरम्, शालिकलापश्च तण्डुलार्थमुपादीयते सन्ति चात्र तण्डुला इत्यनैकान्तिको हेतुः।

आह—आवरणोपलब्धेरयुक्तम्। तिलादिष्वावरणं प्रत्यक्षत उपलभ्यते, तत्प्रतिबन्धात् तैलादीनामग्रहणव्यापारश्च कर्तुस्तद्विरागार्थो न तु कार्यस्यावरणमस्ति। तस्माद्विषमो दृष्टान्तः। उच्यते—न, मार्गान्तरत्वात्। यद् यत्रास्ति न तत् तदर्थमुपादीयत इति पूर्वं भवताऽतिसृष्टम्। इदानीं त्वागमविगमार्थं सतोऽप्युपादानमिति ब्रु[ 42b ]वतो मार्गान्तरगमनं पूर्ववादत्यागोऽनैकान्तिकस्य चापरिहार इति। यत्पुनरेतदुक्तं परिणामाद्युपपत्तेरदोष इति, तथा तदस्तु। यत्तूक्तं मार्गान्तरानुपपत्तेरिति, अत्र ब्रूमः—



एतदप्ययुक्तम्। कस्मात्? परिणामधर्मानवबोधात्। सतो धर्मान्तरस्य निरोधमसतश्चोत्पत्तिं परिणाममभिदधतो व्यक्तोऽयमुपालम्भः स्यात्। न त्वनया कुसृत्या प्रतिष्ठामहे। किं तर्हि साधनानुगृहीतस्य धर्मिणो धर्मान्तरस्याविर्भावः पूर्वस्य च तिरोभावः परिणामः। न चाविर्भावतिरोभावावुत्पत्तिनिरोधौ। व्यूहसंश्लेषव्यक्तिप्रचयास्तु किं सतो धर्मा उत स्वतः सन्त इति विचार्यम्। किञ्चातः—यदि तावदसतो धर्माः, यथा कस्येति वाच्यम्। अथ स्वयमसन्तः पश्चाद् भवन्ति तदप्ययुक्तम्। कस्मात्? अनर्थान्तरत्वात्। सत्यर्थान्तरभावे प्रागसन्तः पश्चादुपलभ्यमानाः सत्कार्यवादं निराकुर्युः। स चैषामर्थान्तरभावो न प्रसिद्धः। तस्मात् किमत्रोत्पन्नम्? ग्रहणाग्रहणविकल्पे चोक्तः परिहारः। किञ्चान्यत्—द्रव्यान्तरोत्पत्तिव्याघातात्। उपेत्य वैषामुत्पत्तिं ब्रूमः, यदि हि परिणामव्यूहसंश्लेषव्यक्तिप्रचयमात्रं कार्यमिष्यते। यदुक्तं द्रव्याणि द्रव्यान्तरमारभन्त इति तस्य व्याघातः। कस्मात्? न ह्येते भावा द्रव्यान्तरम्। तस्माद् दिनकरकिरणप्रतापमूर्च्छितस्येव दावाग्न्युपसर्पणदोषोऽनुतापायैव भवतः प्रतिपत्तिः। एतेनारम्भोपरमोत्पन्नविशेषप्रसङ्गो जन्म-सच्छब्दः प्रत्युक्तः। कथम्? आत्मभूतं हि तन्तूनां पटाख्यं व्यूहस्थानीयं सन्निवेशविशेषं यदाकारकाणि स्वेन स्वेन व्यापारेणाविष्कुर्वन्ति तदा क्रियते उत्पद्यते जायत इत्येवमादिर्लोकस्य व्यवहारः प्रवर्तते। यदा तु कारकाणि शक्त्यन्तराविर्भावात् संस्थानान्तरेनौत्सुक्यवर्तितामवस्थामुपसंहरन्ति तदा प्रागुपलब्धं संस्थानं विनाशशब्दवाच्यतां प्रतिपद्यते। परमार्थ[ 43a ]तस्तु न कस्यचिदुत्पादोऽस्ति न विनाशः। यत् पुनरेतदुक्तं जन्मशब्दः प्रागभूतस्यार्थस्य भावोपक्रममाहेति, तदपीच्छामात्रम्। कस्मात्? विवादात्। सद्विषयं जन्मेति विवादेऽनुपक्ते जन्मशब्दः प्रागभूतस्य सद्भावमाचष्ट इति ब्रुवतोऽनुक्तसमम्। पुरुषादावदृष्टत्वादसिद्धिरिति चेत्, स्यादेतत्—यदि तर्हि क्रियते उत्पद्यते जायत इत्येषोऽर्थः सद्विषयः कल्प्येत। प्रधानपुरुषयोरपि तत्प्रसङ्गः सदसदविशेषादिति। अतश्च विवादावस्थमेवैतत् प्रकरणमिति। एतच्चायुक्तम्। कस्मात्? संस्थाविषयत्वात्। यदा भावः स्वतोऽनर्थान्तरभूतं संस्थानं भजते तदैते शब्दाः प्रवर्तन्त इत्युक्तम्। दृष्टञ्च लोके, तद् यथा मुष्टिग्रन्थिकुण्डलानि करोति जनयत्युत्पादयति अभिव्यक्तात्मसु च मू.......लोकादिषु भवत्युत्पन्नं जातमित्युभयपक्षप्रसिद्धे तु शशविषाणादौ नैते शब्दाः प्रवर्तन्ते, तस्माद् भवत एवानिष्टप्रसङ्ग इति। उक्तञ्च—

"यद्यसत्त्वं घटादीनामुत्पत्तौ हेतुरिष्यते।
शशशृङ्गेऽपि तुल्यत्वादुत्पत्तिस्ते प्रसज्यते" ॥

इति सिद्धं सत् कार्यम्।

इतश्च सत् कार्यम्—**शक्तस्य शक्यकरणात्।** शक्यमिदमस्य, शक्तश्चायमस्येत्ययं नियमः सतां दृष्टः। तद् यथा चक्षुषो रूपस्य। अस्ति चायं पटस्य वेमादीनां नियमः, तस्माच्च सत् कार्यम्। सहकारिवत् तन्नियम इति चेत्, स्यान्मतम्—यथाऽऽपो बीजाङ्कुरस्योत्पत्तौ समर्था भवन्ति, न काष्ठादग्नेर्वा; उभयं च तत् तासु न विद्यते बीजादपां विच्छिन्नत्वात्। यथा च सूर्यः सूर्यकान्तादग्निमुत्पादयितुं समर्थो न चन्द्रकान्ताच्च पानीयम्। उभयं तत् तत्र न विद्यते। तथा च तन्त्वादीनां पटस्येव शक्तिनियमः स्यात्। न च पटस्य तन्तुषु सत्त्वं स्यादिति। एतच्चायुक्तम्। कस्मात्? साध्यत्वात्। अङ्कुरादयोऽपि कार्यमबादीनां नातः साध्यम्। किमङ्कुरोऽस्त्यथ नास्त्येव। तथा सूर्य[ 43b ]कान्तेऽग्नि स्तदर्थमेव चायं विवादोऽनुषक्तः। यत्तूक्तमपां विच्छिन्नत्वमङ्कुरेऽस्तीति तत्रापि यासामपां बीजानुप्रवेशादङ्कुरभावेन विपरिणामस्ताभ्यः तस्यान्यत्वं साध्यम्। अतो न किञ्चिदेतत्। किञ्चान्यत्—रूपव्यवस्थानाच्च। तद् यथा रूपं विज्ञानोत्पत्तिहेतुत्वे सति न रूपं दृष्टमिति नेदानीं तत्सामान्यात् रूपमप्यरूपं भवत्येव। पटाकारणत्वाद् वेमादयो न पट इति नेदानीं तन्तवोऽप्यपटः। तस्मात् युक्तमेतत् शक्तस्य शक्यकरणात् सत् कार्यम्।

**कारणभावाच्च सत् कार्यम्।** इहासति कार्ये कारणभावो नास्ति। तद् यथा बन्ध्यायाः। अस्ति चेह कारणभावः तन्तुपटयोस्तस्मात् सत् कार्यम्। कारणान्तरात् कार्योत्पत्तिदर्शनादन्यत्र तद्बुद्धिरिति चेत्, स्यान्मतम्—प्राक् कारणान्तरात् कार्यान्तरस्यासत उत्पत्तिमुपलभ्य पश्चात् कारणान्तरे कारणबुद्धिर्भवतीति, एतच्चायुक्तम्। कस्मात्? अनभ्युपगमात्। असतः कार्यस्योत्पत्तिरेव न सिद्धा शशविषाणादिष्वसिद्धत्वात्। कुतः पुनस्तत्? निमित्ताकारबुद्धेः कारणभावादिति चेत्, स्यादेतत्—असत्त्वाविशेषेऽपि पटस्य कारणं समवाय्यसमवायिनिमित्तलक्षणमस्ति, तस्मात् पट उच्यते न शशविषाणमिति। एतच्चायुक्तम्। कुतः—हेत्वभावात्। असत्त्वाविशेषेऽपि पटस्य कारणमस्ति न शशविषाणस्येति। एतदप्ययुक्तम्। कस्मात्? उक्तत्वात्। संस्थानं कार्यं पटस्य संस्थानं न पुरुषस्योक्तम्। प्राक् संस्थानवत् तद्विशेष इति चेत्, स्यान्मतम्—यथा सत्त्वाविशेषे पटः संस्थानं न पुरुष एवमसत्त्वाविशेषे पटः कार्यं न शशविषाणमिति। एतदप्ययुक्तम्। कस्मात्? सामान्यविशेषाभावात्। सामान्यस्य हि विशेषपरिग्रहः संस्थानम्। [ 44a ]न त्वयमस्ति चेतनाशक्तौ विकल्पः। तस्मान्न पुरुषः संस्थानम्। असतस्तु निरात्मकत्वाद् विशेषो दुरुपपाद एव। तदुपपत्तौ वा सत्त्वप्रसङ्ग इति। आह च—



"निरात्मकत्वादसतां सर्वेषामविशिष्टता।
विशेषणञ्चेद् भिन्नं ते सत्त्वमभ्युपगम्यताम्॥"

तस्माद् युक्तमेतत् कारणभावाच्च सत् कार्यम्। एवं तावद् वैशेषिकमतेनासत्कार्यवादो न विमर्दसहः।

बौद्धपक्षे तु भूयान् दोषः। कथं तर्हि द्रव्यान्तरं पटो नेष्यते। तन्तुष्वेव तथास्थेषु पट इत्यादिबुद्धय इत्येवमादिना न्यायेनावयविप्रतिषेधात् संयोगोपसंयोगिभ्यस्तेषामर्थान्तरमिष्टम्। तत्रैतावती परिकल्पना स्यात्—यदुत तन्तुसंयोगो वा पटः, संयोगकरणं वा द्रव्यान्तरम्, उभयञ्च तेषां नार्थान्तरम्। अथोत्पत्तिविनाशौ कस्यापीति मायाकारचेष्टितम्—तदपि चित्रतरोऽयमुपन्यासः। कारणोपादानं तु द्रव्यान्तरोत्पत्तिविनाशाभ्युपगमात् न तार्किकसदृशो विचारः। तस्मात् पारमर्ष एव पक्षो ज्यायान्।

यथा चासत्कार्यं न सम्भवति तथा च-शब्दात् सदसत्कार्यमपि। परस्परविरोधात् नैव सत् नासदिति। एतदप्यनुपपन्नम्। कस्मात्? सत्त्वे हेत्वभिधानात्। निश्चितः प्रागुत्पत्तेः कार्यस्य सद्भावः।

प्रकृतमिदानीं वक्ष्यामः। किञ्च प्रकृतं महदादि, तच्च प्रकृतिविरूपं सरूपञ्चेति वचनाद् वैरूप्यम्। आह—प्राक् सारूप्यग्रहणं सुखप्रतिपत्तिहेतुत्वात्। अधिगतसारूप्यस्य हि सुखं वैरूप्यस्य प्रतिपत्तिर्भवतीति प्राक् सारूप्यग्रहणं कर्तव्यम्। यथा त न्त्रा न्त री या णां 'सदनित्यं द्रव्यवत् कार्यकारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषमुक्त्वा, 'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' (वै, सू, १।१।१०) इत्येवमादिः विशेषोऽभिधीयते। उच्यते—तदनुपपत्तिरविशेषात्। यथैवाधिगतसारूप्यस्य लघीयसी वैरूप्यप्रतिपत्तिरेवमधिगतवैरूप्य[ 44b ]स्य लघीयसी सारूप्यप्रतिपत्तिः। कस्मात्? परस्परापेक्षत्वात्। वैरूप्यापेक्षं हि सारूप्यं सारूप्यापेक्षञ्च वैरूप्यमिति।

आह—एवमपि वैरूप्यस्य प्रागभिधाने प्रयोजनवचनम्। द्वयोरविशेषेऽन्यतरस्य प्रागभिधाने नियमहेतुर्वक्तव्य इति। उच्यते—न, वैरूप्यस्य प्रकरणानङ्गभावात्। विच्छिन्नं हि वैरूप्यमत स्तत् पूर्वमभिधाय प्रकरणाङ्गं सारूप्यं सुखमभिधातुमित्येवमर्थमाचार्येणैव क्रियते। कथं सारूप्यस्य प्रकरणाङ्गत्वमिति चेत्—त्रैगुण्याभिधानद्वारेण गुणलक्षणोपदेशात्, तत्सिद्धौ चाविवेक्यादीनां व्यक्तसिद्धेः, कारणगुणात्मकत्वाच्च कार्यस्य

1 See, V. S. 1. 1. 8.

प्रधाने त्रैगुण्यादिप्रतिपत्तेः, कार्यकारणभावासन्देहाच्चन्द्रै(?) प्रधानास्तित्व-प्रसिद्धयपदेशात्, तत्सिद्धौ च भोग्यस्य भोक्त्रपेक्षत्वात् पुरुषसिद्धेः, अधिगतभोक्तृभोग्यस्य तत्संयोगस्य सुखप्रतिपाद्यत्वात् तादर्थ्याच्च तत्त्वभूतभावसर्गाणाम्; तस्माद् युक्तमेतत् प्रकरणाङ्गत्वात् सारूप्यं पश्चान्निर्दिश्यते, तदसमम्बन्धादितरत् प्रागिति।

आह—यदि तर्हि भवान् प्राग् वैरूप्याभिधानं न्याय्यं मन्यते, तद्वक्तव्यं किं पुनरिदं वैरूप्यमिति। उच्यते—

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥ १०॥**

तत्र हेतुः कारणमित्यनर्थान्तरम्, तदस्यास्तीति हेतुमत्; नित्यं ध्रुवम् न नित्यमनित्यम्। व्याप्नोतीति व्यापि, न व्यापि अव्यापि—असर्वगतमित्यर्थः। सह क्रियया सक्रियम्। अनेकं भिन्नम्, आश्रितमाधेयम्, लिङ्गं तल्लक्षणोपपन्नम्। अवयूयन्त इत्यवयवाः—पृथगुपलभ्यन्त इत्यर्थः, सहावयवैः सावयवम्। परतन्त्रमन्याधीनम्। एते हेतुमदादयः परतन्त्रान्ता निरपवादा व्यक्तस्यासाधारणाः प्रधानपुरुषाभ्यां धर्माः।

आह—हेतुमदित्य[ 45a ]विशेषः सर्वत्र सम्भवात्। व्यक्ताव्यक्तपुरुषाणां हि सर्वेषां हेतुरस्तीति, अविशेष एवायं पठितव्यः। उच्यते—न, कारकपरिग्रहात्। यद्यपि व्यक्ताव्यक्तपुरुषाणामविशिष्टं हेतुमत्त्वं तथाऽपि पुरुषस्य कारकस्य हेतोः परिग्रहं करिष्यामः। स च व्यक्तस्यैव नान्यस्येति नायमविशेषो भविष्यति।

आह—तदनुपपत्तिः, विशेषानुपादानात्। हेतुरिति सामान्यशब्दोऽयम्। सामान्यशब्दश्च नार्थप्रकरणशब्दान्तराभिसम्बन्धमन्तरेण विशेषेऽवतिष्ठत इति विशेष उपादेयः स्यात्। स तु नोपादीयते। तस्मात् ते अविशेष एवायमिति। उच्यते—न, सर्वसम्भविनोऽभिधानस्य प्रकर्षार्थत्वात्। इह यः सर्वसम्भवी धर्म एकविषय उपादीयते, तस्मात् प्रकर्षो विज्ञायते। तद् यथा—भोक्ता माणवक इत्युक्ते सर्वेषां भोक्तृत्वस्य सम्भवादेवं विज्ञायते प्रकर्षेणायं भोक्तेति, एवमिहापि सर्वसम्भवीत्याहाचार्यो व्यक्तं हेतुमदिति। तेन वयमस्मात् प्रकर्षं विज्ञास्यामः। कश्च प्रकर्षः—कारकज्ञापकयोरुभयोरपि सम्भवे कारकस्यैव ग्रहणम्। अनित्यशब्दसम्बन्धाद्वा। अथवाऽयमाचार्यो हेतुमदित्युक्त्वाऽनित्यमिति पठति। शब्दान्तराभिसम्बन्धात् योऽनित्यसहचरो हेतुस्तस्येह ग्रहणं गम्यते। तस्मान्नित्य( तस्मान्न नित्य- ? )सहचरो हेतुः कारकः।



आह—एवमप्यनुपपन्नमेतत्। कस्मात्? उभयत्र तत्सम्भवात्। उत्पाद्यव्यङ्ग्ययोर्हि विनाशः पटादिषु दृष्टत्वात् अव्यभिचारात् त न्त्रा न्त री या मन्यन्ते। तस्य वा परिहारो वक्तव्यः। न वा वक्तव्यं विशेषस्थितिरस्तीति। उच्यते—नैकान्तवादप्रसङ्गात्। सर्वेण हि वादिनाऽवश्यं किञ्चिन्नित्यमभ्युपगन्तव्यम्। अन्यथा विनाश्यपि न कश्चिदर्थः शब्दबुद्धिभ्यां न व्यज्येत। तथा सत्येकान्तवादोऽयं स्यात्। स च [ 45b ] युक्तिमद्भिर्नेष्यते। तथाऽसंस्कृतमप्येवं कल्प्यमाने विनाशि स्यात्। तस्मादुत्पाद्यव्यङ्ग्ययोर्विनाशं ब्रुवतोऽतिसाहसम्।

आह—अनित्यत्वानुपपत्तिः सत्कार्यवादाभ्युपगमात्। यथैव हि नासत उत्पत्तिरस्त्येवं सतोऽपि विनाशेन न भवितव्यम्। अथ सतोऽपि विनाशोऽभ्युपगम्यते तेन प्रलयकाले विनष्टानां तत्त्वादीनां पश्चादसतामुत्पत्तिः सत्कार्यवादं निराकुर्यात्। तस्मात् नित्यं युक्तमिति, अयुक्तमनित्यमेवेति। उच्यते—न, व्यक्त्यपगमप्रतिज्ञानात्। सदा वयं सतोऽविनाशमाचक्षाणाः ( न ? ) सत्कार्यवादं प्रत्याचक्षीमहि। करणानां तु यः परस्परं संसर्गात् संस्थानविशेषपरिग्रह स्तस्य विरोधिशक्त्यन्तराविर्भावाद् व्यक्तिस्तिरोधीयत इत्येतद् विनाशशब्देन विवक्षितम्। तथा च वा र्ष ग णाः पठन्ति—[1]"तदेतत् त्रैलोक्यं व्यक्तेरपैति, न सत्त्वादपेतमप्यस्ति विनाशप्रतिषेधात्। संसर्गाच्चास्य सौक्ष्म्यं सौक्ष्म्याच्चानुपलब्धि स्तस्माद् व्यक्त्यपगमो विनाशः। स तु द्विविधः—आ सर्गप्रलयात् तत्त्वानां किञ्चित्कालान्तरावस्थानादितरेषाम्' इति।

आह—अयुक्तमेतत्। कस्मात्? विप्रतिपत्तेः। सर्वमेव क्षणिकं बुद्धिबोध्यमाकाशनिरोधवर्जितमिति शा क्य पु त्री याः प्रतिपन्नाः। तेषां प्रतिषेधो वक्तव्यो वा न वक्तव्यं द्विविधमनित्यमिति। उच्यते—न, हेत्वनुपगमात्। प्रतिक्षणमुच्छिद्यते त्रैलोक्यमित्यत्र लिङ्गमभियुक्ता अपि नोपलभामहे। तस्मात् नैतदस्माकं बुद्धाववतिष्ठत इति।

आह—अन्ते क्षयदर्शनात्, इह यस्यान्ते क्षय स्तस्य क्षणिकत्वं दृष्टम्। तद् यथा,

---

1 Cf. तदेतत् त्रैलोक्यं व्यक्तेरपैति। कस्मात्—नित्यत्वप्रतिषेधात्। अपेतमप्यस्ति विनाशप्रतिषेधात्। संसर्गाच्चास्य सौक्ष्म्यम्, सौक्ष्म्याच्चानुपलब्धिरिति—*Yoga-Sūtra Bhāṣya*, 3. 13.

Also, यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्—न नित्यो विकार उपपद्यते, अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्—N. Bh, 1. 2. 6.

Again *Uddyotakara* urges, उदाहरणम्—'तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति विनाशप्रतिषेधात्—NV. 1. 2, 6.

प्रदीपज्वालाबुद्धिशब्दानाम्। अस्ति चान्ते क्षयः संस्काराणां तस्मात् क्षणिकाः उच्यन्ते। [ 46a ] तदनुपपत्तिः, साध्यत्वात्। इह तु सिद्धेनातिदेशो भवति। तद् यथा गवा गवयस्य। न तु प्रदीपज्वालाबुद्धिशब्दानां क्षणिकत्वं प्रसिद्धम्। अतो न किञ्चिदेतत्।

आह—नैतदप्रसिद्धम्। कस्मात्? वृद्ध्यदर्शनात्। यदि हि अविनष्टायां ज्वालायामिन्धनान्तराले ज्वालान्तरमुत्पद्येत वृद्धिरपि स्यात्, न तु दृश्यते। तस्मादनवस्थिता प्रदीपज्वाला। किञ्चाश्रयाभावात्। यदाश्रया ज्वालोत्पत्ति स्तदुत्पद्यमानैवासौ निरुणद्धीति न युक्तमस्या विनाऽऽश्रयेणावस्थातुम्। उपयुक्तेन्धनाया अप्यवस्थानप्रसङ्गात्। किञ्चावरणोपरिपाते प्रभाभेदप्रसङ्गात्। ज्वालानामवस्थानमिच्छत उपरिष्टादावरणोपनिपातात् प्रभायास्तन्तोरिव द्वैधीकरणं स्यात्। अनिष्टश्चैतत्। तस्मान्न दीपज्वालानामवस्थितिरस्तीति। एतेन शब्दोऽपि प्रत्युक्तः। कथम्? तस्यापि यदि विनाशो न स्यात्, द्रुम एव चाम्बुधाराऽभिघातात् प्रतिक्षणमपूर्वशब्दाविर्भावात् पूर्वशब्दाविनाशाच्च वृद्धिः स्यात्। अदृष्टा चासौ। किञ्च, प्रत्यक्षत उपलब्धेः। पाण्युपघातजो हि शब्द उत्पत्तेरूर्ध्वं न भवतीति प्रत्यक्षसिद्धमिदम्। अभिव्यक्तिरिति चेन्न नियमादर्शनात्। शब्दानां वाच्यवक्तृभेदभिन्नानां कारणनियमो दृष्टः। न चैतदस्ति समानेन्द्रियग्राह्याणाम्। किञ्च—पृथक् श्रुतेः। अभिव्यक्तिकारणदेशाच्च पृथक् श्रूयते शब्दः। न चैतदभिव्यङ्ग्यानां घटादीनां दृष्टमिति। क्षणिकबुद्धेस्तु प्रागेवोक्ता नाशहेतवः। तत्र यदुक्तं साध्यत्वात् प्रदीपज्वालाबुद्धिशब्दादीनां क्षणिकत्वस्य न संस्काराः क्षणिका इत्येतदयुक्तम्।

उच्यते—यदुक्तं वृद्ध्यदर्शनादिति, अत्र ब्रूमः—अयुक्तमेतत्। कस्मात्? विशेषप्रतिपत्तेः। क्षणिकमित्युक्तपरिमाणोऽयं कालनिर्देश आश्रीयते, वृद्ध्यभावा[46b]-दिभ्यश्च कदाचिद् विनाशमात्रं प्रतीयते। स तु एकं क्षणमवस्थितानां ज्वालानां भवति न पुनः क्षणद्वयमित्येतदप्रमाणकमाज्ञामात्रञ्च गृहीतशिक्षाकः कः प्रतिपत्तुमुत्सहते। यदुक्तमावरणोपनिपातात् प्रभाभेदप्रसङ्ग इति, एतदप्ययुक्तम्। कस्मात्? उभयथाऽनुपपत्तेः। किं तावद् यस्य द्वैधीभावो दृष्टस्तदक्षणिकमाहोस्विद् यस्य न दृष्टस्तत् क्षणिकमिति। किञ्चातः—तद् यदितावदेवमभ्युपगम्यते यस्य द्वैधीभावस्तदक्षणिकमिति तन्तोरक्षणिकत्वप्रसङ्गः। अथ मतं यस्य द्वैधीकरणं न दृष्टं तत् क्षणिकमिति यथा किमत्रोदाहरणम्। कुतः? यस्मात् न ह्यनुदाहृतो वादः। एतेन शब्दवृद्धिः



प्रत्युक्ता। यत् पुनरेतदुक्तं पाण्युपघातज-शब्दानवस्थानादिति, तत्र भवतैवोक्तं व्यङ्ग्यत्वादिति। यत्तूक्तं नियमदर्शनान्न व्यङ्ग्यः शब्द इति तदयुक्तम्, अनेकान्तात्। यथा शुक्लकृष्णौ नियमतः शुक्लकृष्णशब्दाभ्यां प्रत्याख्येते, न च तौ तयो र्न व्यङ्ग्यौ। एवं शब्दस्यापि वक्त्य(वाच्य ?)वादिनियमः स्यात्, न चाव्यङ्ग्यः स्यात्। यदप्युक्तं व्यङ्ग्यव्यञ्जकयोर्देशभेदानुपपत्ते र्न व्यङ्ग्यः शब्द इति, तदप्ययुक्तम्। कस्मात्? चक्षुर्वत् तदसिद्धेः। तद् यथा—चक्षुषो रूपस्य च देशभेदेऽपि व्यङ्ग्यव्यञ्जकभावः, एवं शब्दस्यापि स्यात्। तस्मान्न शब्दोऽपि क्षणिकः। बुद्धेस्तु स्वाधिकार एव क्षणिकत्वे हेतुरिति करणो ( कारणम् ? ) वक्ष्यामः। तत्र यदुक्तमन्ते क्षयदर्शनात् प्रदीपज्वालाबुद्धिशब्दवत् क्षणिकाः संस्कारा इत्येतदयुक्तमिति।

आह—इतस्तर्हि प्रदीपादीनामन्येषां च भावानां क्षणिकत्वम्। कुतः—अनवस्थानहेत्वभाव..............................................................

.... .... .... .... .... .... .... .... ....

.... .... .... .... .... .... .... .... ....

.... .... ....दृष्टादर्थोऽभ्युपगम्यते। [ 47a ] ननु प्राप्तमिदमुत्पन्नमात्रस्यास्य विनाशविघ्नो नास्तीति कौटस्थ्यं सर्वभावानां प्राप्तमिति। उच्यते—न, कारणोपपत्तेः। अधिकारो हि सर्वभूतानां संस्कारवशादुत्पत्ति स्तदवस्थानमेव तेषामलं स्थितये। सति विनश्वरत्वे संस्कारोपयोगे तु स्थित्यपभ्रंश इत्यतोऽस्ति किञ्चित्कालमवस्थानं भावानाम्। न च कौटस्थ्यप्रसङ्गः। किञ्चान्यत्—सन्ततिविनाशप्रसङ्गात्। [1]नंष्टुश्चेदुत्पत्तिसमनन्तरं विनाश इष्यते, सन्ततिरप्यन्ते क्षयदर्शनात् नंष्ट्री। तस्या अपि तथैव विनाशः प्राप्तः। ततश्च तडिद्-विलसितवत् क्षणदृष्टिनष्टस्य त्रैलोक्यस्याभावः संसारोच्छेदप्रसङ्गः। तस्मादयुक्तं नंष्टुरुत्पत्तिसमकालमेव विनाश इति। कारणानवस्थानात् न दोष इति चेत्—स्यान्मतम्, अस्ति कारणं पूर्वोत्पत्तेर्भाव उत्तरस्योत्पत्तौ, स चाप्युत्तरस्य। इत्येवं सन्ततेरनुच्छेदो विरोधिभावान्तर-संसर्गात् तूभयत स्तथोत्पत्तेर्भ्रंश इति। एतदप्ययुक्तम्। कस्मात्? पूर्वहेतुत्यागात्। प्रागुक्तं येन नंष्टृत्वमसौ मन्त्रौषधप्रयोगैरपि क्षणादूर्द्ध्वं नावतिष्ठते। साम्प्रतं तु नंष्ट्री सन्ततिः कारणवशादवतिष्ठत इति सोऽयं पूर्वहेतुत्यागः। विनाशहेत्वभावात् क्षणिकत्वमिति चेत्, स्यादेतत् नास्ति भावानां विनाशहेतोरुपलम्भ इति। अतः स्वाभाविकः प्रध्वंसः। तस्मादुत्पत्तिसमकालमसौ

1. For the *root* 'नंश्' and its use, see Sanskrit-Wörterbuch, Vol. IV, p. 3.

Also for 'नंष्टृ'—*Vācaspatyam*, p. 3925.

केन वार्यते। इदमप्ययुक्तम्। कस्मात्? अनभ्युपगमात्। को ह्ये........अहेतुको विनाशः। किं तर्हि प्रागेवोक्तमर्थवशाद्भावानां स्थिति स्तदव........विरोधिद्रव्यान्तरसम्बन्धेनाध्यात्मिकादिना भवतीति। विनाशस्य विनाशप्रसङ्गादयुक्तमिति चेत्, यदि तर्ह्यभावोऽपि हेतुमान् परिकल्प्यते; प्राप्तमस्यापि विनाशित्वम्। अनिष्टं [47b] चैतत्। तस्मादहेतुको विनाश इत्येतदयुक्तम्। कस्मात्? व्यक्त्यपगमप्रतिज्ञानात्। अभावविनाशिनं प्रति सत्यमेवायमुपालम्भः स्यात्। व्यक्त्यपगमस्तु नो विनाशः। स तु हेतुमत्त्वेन कथं विरोत्स्यत इति। तस्मान्न विनाशहेत्वभावात् क्षणिकं संस्कृतमिति। इतश्च न क्षणिकम्। कस्मात्[1] .... .... ....

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलश्च रजः।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥ १३॥**

एवशब्दः प्रत्येकं परिसमाप्यते। सत्त्वं लघु प्रकाशकमेवेष्टम्। यत् किञ्चित् कार्यकरणे लघु प्रकाशकञ्च तत् सत्त्वरूपमिति प्रत्यवगन्तव्यम्। तत्र कार्यस्य तावदुद्गमनहेतुः धर्मो लघुत्वम्। करणस्य वृत्तिपटुत्वहेतुः प्रकाशस्तु। पृथिवीधर्मस्य छायालक्षणस्य तमसस्तिरस्कारेण द्रव्यान्तरप्रकाशनं करणस्यापि ग्रहणं संकल्पाभिमानाध्यवसायविषयेषु यथास्वं प्रवर्तमानम्। उपष्टम्भकं चलमेव रजः। यः कश्चिदुपस्तम्भश्चलता चोपलभ्यते तद्-रजोरुपमित्यवगन्तव्यम्। तत्रोपस्तम्भः प्रयत्नः, चलता क्रिया। सा च द्विविधा—परिणामलक्षणा प्रस्यन्दलक्षणा च। तत्र परिणामलक्षणया सहकारिभावान्तरानुगृहीतस्य धर्मिणः पूर्वधर्मात् प्रच्युतिः, प्रस्यन्दलक्षणाः प्राणादयः कर्मेन्द्रियवृत्तयश्च वचनाद्याः। बाह्यानां द्रव्याणामुत्पतननिपतनभ्रमणादीनि। **गुरु**

1 Here in the Ms. a considerable portion is left blank and it is apparent that discussion on the Kārikās XI and XII has been left out.



**वरणकमेव तमः**—यत् किञ्चिद् गौरवं वरणञ्चोपलभ्यते तत् तमोरूपमिति प्रत्यवगन्तव्यम्। तत्र गुरुत्वं कार्यस्याधोगमनहेतुः धर्मः करणस्य वृत्तिमन्दता। वरणमपि कार्यगतं च द्रव्यान्तरतिरोधानम्। करणगता चाशुद्धिः प्रकाशप्रतिद्वन्द्विभूता। [48a]इत्येष सत्त्वादीनामव्यतिकरेण स्वभावोपलम्भः, यत एषां नानात्वमवसीयते। यत् पुनरेतदुक्तं स्त्रीक्षत्रमेघेषु स्वभावव्यतिकरोपलम्भादेकगुणस्त्रिरूपः, सर्वे वा सर्वरूपाः, रूपान्तरस्य वा सत उत्पत्तिरिति, अत्र ब्रूमः—न, गुणभूतस्य भक्तित उपकारात् प्रधानरूपोपपत्तेः। इह गुणभूतस्य भक्तितः प्रधानोपकारित्वे सति भक्तितः तद्-रूपापत्तिर्दृष्टा। तद् यथा—क्षीरादेः। तद्धि मुखादिषु दृष्टप्रतिलब्धप्रवृत्तिः पित्तस्य स्वेन रूपेणाङ्गभावं गच्छंस्तस्योपकारात् तिक्तं सम्पद्यते। न च तथा सदेव सत्त्वमपि स्त्रैणगुणभूतं सपत्नीरजसः स्वेन रूपेणाङ्गभावं गच्छंस्तस्योपकाराद् दुःखं सम्पद्यते। तमसो मोहः। एवं क्षात्रं रजः आर्यदारलक्षणस्य सत्त्वस्य दस्युलक्षणस्य च तमसः। एवं मेघ्यं तमः कार्षिकसत्त्वस्य प्रोषितदयितायाश्च रजसः। तस्मान्नास्ति गुणानां स्वभावव्यतिकरः। किञ्चान्यत्—अगुणभूतानां स्वभावग्रहणात्। यदा चैतेऽङ्गभावमुपगच्छन्तो मध्यस्थास्तुल्यसंस्काराश्च प्रतिपद्यन्ते तदा स्वरूपेणैव, तस्मादसङ्कीर्णं गुणरूपम्।

आह-न, सन्देहात्। उभयथा हि रूपान्तरग्रहणं क्षीरादिषु दृष्टम्, ताद्रूप्यात् तैश्च विपरिणतानां गुणभावाच्च यथोक्तम्। तत्र कथमिदमेकान्तेन निश्चीयते गुणभावात् सत्त्वादीनां रूपान्तरग्रहणं न पुनस्ताद्रूप्यादेवेति। उच्यते—ग्रहणविकल्पोपलम्भात्। यदि स्त्रैणं सत्त्वं ताद्रूप्यादेक सपत्न्या तेन (?) गृह्यते, तेन भर्तुरपि तथा ग्रहणप्रसङ्गो मध्यस्थानां तुल्यसंस्काराणाञ्च। अनिष्टं चैतत्। तस्माद् भाक्तोऽयं गुणविकल्पोपलम्भः। किञ्चान्यत्—उत्तरकालं स्वरूपग्रहणान्निवृत्तानुशयाभिश्चैकार्थतामुपगताभिः सपत्नीभिः स्वेनैव रूपेण स्त्रैणस्य सत्त्वस्य ग्रह[48b]णमुपलभ्यते। स्वगृहसमवस्थितैश्चार्यदारैः क्षत्रियाणाम्। निष्पन्नशस्यैश्च कृषीबलैर्मेघानाम्। तस्मात् भाक्तोऽयं ग्रहणविकल्पोपलम्भः। तस्माद् युक्तमेतत्—अन्योन्यजननवृत्तयो गुणाः, न च संकीर्णस्वभावा इति। यत् पुनरेतदुक्तमन्योन्यमिथुनत्वानुपपत्तिः सत्त्वस्येतरविरोधात्, इत्यत्र ब्रूमः—अस्ति चायं विरोधो गुणानाम्। **प्रदीपवच्चार्थतो वृत्तिः** किमुपपद्यत इति वाक्यशेषः। तद् यथा—वर्तिज्योतिस्तैलानां परस्परविरोधेऽपि प्रदीपकरणैककार्यसाधनभावोपगतानां वृत्तय एकत्र मूर्च्छिताः सहभावं प्रकृष्टमपि कालमनुभवन्ति, एवं सत्त्वरजस्तमसां सति विरोधे महदाद्येककार्यसाधनभावोपगतानां वृत्तय एकत्र

मूर्च्छिताः सह भवन्तीति । युक्त्यभावादसिद्धिरिति चेत्, स्यान्मतम्—का पुनरत्र युक्तिर्येन विरोधिनामेककार्यता भवन्तीति । उच्यते—गुणप्रधानभावात्—गुणभूतो हि प्रतियोगी प्रधानभूतेन तदुपकारकत्वान्न विरुध्यत इति संसर्गेण वर्तितुमुत्सहते । तुल्यबलयोस्तु द्वयोः सत्यमेव सहावस्थानस्य नास्ति सम्बन्धः । तथा च भगवान् वार्षगण्यः पठति—[1]'रूपातिशया वृत्त्यतिशयाश्च विरुध्यन्ते, सामान्यानि त्वतिशयैः सह वर्तन्ते । तद् यथा—जलाग्नी पचनीयस्वेदनीयेषु कार्येषु छायातपौ च सूक्ष्मरूपप्रकाशेन शीतोष्णे च व्रजावस्थितौ(?), एवं तत् । सिद्धः प्रदीपवत् सत्त्वरजस्तमसां विरोधेऽपि सह भावः ।

आह- यदुक्तं लघ्वादिभावस्वभावभेदाद् गुणनानात्वमित्यत्र ब्रूमः—

"भिन्ना लक्षणभेदाश्चेन्मिथः सत्त्वादयो गुणाः ।
[ 49a ] तर्हि लक्षणयुक्तत्वात् षड्गुणाः प्राप्नुवन्ति ते" ॥

यदि लघ्वादिलक्षणभेदात् सत्त्वादीनां नानात्वं मिथोऽभ्युपगम्यते, तेन लघुत्वप्रकाशकत्वयोरपि भेदोऽस्ति गुणद्वयप्रसङ्गः । एवमुपस्तम्भ-चलताभ्यां गौरव-वरणाभ्याञ्च द्वयं द्वयमिति षडगुणाः प्राप्नुवन्ति । अथ मतं लघुत्वप्रकाशकत्वयोरभेद इति पृथगनभिधानम्, प्राप्तं तद्भेदे वा ग्रहणभेदमनिच्छतः प्राप्तो लघुत्वादिभेदेऽपि गुणभेदस्तथा चैको गुण इति प्राप्तम् । यत् पुनरेतदुक्तं गुणभूतस्य भक्तित उपकारात् प्रधानरूपापत्तिरिति—

अङ्गभावं व्रजत् सत्त्वं दुःखं सम्पद्यते यदि ।
वैरूप्यस्योपसंहारात् पूर्वदोषानिवर्तनम् ॥

यदि हि रजसोऽङ्गभावमुपगच्छत् सत्त्वमुपकारात् तद्रूपं भवति, तेनाप्रतिज्ञातस्य रूपान्तरस्योपसंहारात् त्रैरूप्यं गुणानामेकैकस्य प्राप्तम्, रूपान्तरस्य वा सत उत्पत्तिः । तस्मात् पूर्वदोषापरिहारात् प्रतिज्ञामात्रमेवायं समाधिः । यदप्युक्तमगुणभूतानां स्वभावग्रहणादिति, अङ्गभावानपेक्षं ग्रहणं नास्ति ऋषेरपि । परमर्षेरपि गुणानां कार्यमेव प्रत्यक्षं न शक्तिमात्रेणावस्थानमसंवेद्यत्वात् । तत्र चाङ्गाङ्गि-भावगमनमनिवार्यम् । तस्माद् दोषमनिच्छता गुणा एवापरित्यज्याः । नास्ति वा सुदूरमपि गत्वा तत्सङ्करदोषपरिहारः । उच्यते—यत् तावदुक्तं लक्षणभेदाद् गुण-

1 Cf. उक्तञ्च—रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्तन्ते, *Yoga-Sūtra Bhāṣya*, 3. 13. Here Vācaspati says, अत्रैव पञ्चशिखाचार्यसम्मतिमाह—उक्तञ्च इति.



नानात्ववादिनो लक्षणद्वययोगादेकैकस्य गुणषट्कप्रसङ्ग इति । कस्मात् ? द्वयोर्गुणप्रधानभावानुपपत्तिः (त्तेः) । इहार्थान्तरस्य अर्थान्तरेण गुणप्रधानभावो भवति, यथा स्त्रीक्षत्रमेघेषु व्याख्यातम् । न च लघुत्वप्रकाशयोरुपस्तम्भचलतयोर्गौरव-वरणयोश्च मिथो गुणप्रधानभावोऽस्ति तदनर्थान्तरं धर्माः ते इति नास्ति षट्कप्रसङ्ग इति । किञ्च—अप्रसिद्धत्वात् । न ह्येतत् कचित् प्रसिद्धं [ 49b ] यथा यावन्तो धर्मा स्तावन्तो धर्मिण इति । न चाप्रसिद्धेन व्यवहारः । किञ्च पृथक्त्वैकान्तप्रसङ्गात् । लक्षणभेदान्नानात्वप्रतिज्ञस्य सर्वार्थानां स्वसामान्यलक्षणयोगात् स्वतोऽर्थान्तरमिति पृथक्त्वैकान्तप्रसङ्गः । अथैतदनिष्टम्, तर्हि वक्तव्यं लक्षणभेदाद् गुणानां षट्कमिति । यत् पुनरेतदुक्तमङ्गभूतस्य प्रधानरूपापत्तेः पूर्वदोषानिवृत्तिरिति तदप्ययुक्तम् । कस्मात ? भक्त्यभिधानात् । असकृदधीतमस्माभिर्भाक्तोऽयं गुणानां ग्रहणविकल्प इति, न च भक्तिः परमार्थ इत्यस्थाने यत्नः । यत् पुनरेतदुक्तमगुणभूतानां सत्त्वादीनामृषेरप्यविषयत्वमिति, सत्यमेतत् । यत्तक्तं कार्यस्य विषयभूतत्वादङ्गाङ्गिभावगमनं गुणानां सकलसत्कार्यमपेक्षते, तथा स्त्रीक्षत्रमेघाः प्रकृतास्तेष्वङ्गभावमगच्छत (न् ?) इति विज्ञायत इति । सामान्यशब्दानां हि प्रकरणाद् विशेषेऽवस्थानं भवति । तद् यथा—भोजनकाले सैन्धवमानयेत्युक्ते लवणे सम्प्रतिपत्तिर्नाश्वादिषु ; तस्मात् प्रकरणमनपेक्ष्य महति तन्त्रे दोषाभिधानं बालवाक्यस्थानीयम् । एवं गुणलक्षणोपदेशात् सिद्धं त्रैगुण्यम् ।

आह—अविवेक्यादिरिदानीं गणः कथं प्रतिपत्तव्य इति । उच्यते—

[ [1]अविवेक्यादिः सिद्धस्त्रैगुण्यात् तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥ ]

**अविवेक्यादिः सिद्धस्त्रैगुण्यात् ।** यत् त्रिगुणं तत् 'अविवेकिविषयः सामान्यमचेतनं प्रसवधर्मि' (का, ११) इति । कथमवगम्यत इति चेत्—**तद्-विपर्ययाभावात्,** यस्माद् गुणविपर्ययः क्षेत्रज्ञः । तत्र विषयत्वमचेतनत्वं प्रसवधर्मित्वञ्च न भवतीति पुरस्तात् प्रतिपादयिष्यामः । तस्मात् परिशेषतो व्यक्ते एतेषां धर्माणामविरोधः ।

आह—[2]'तथा प्रधानम्' (का, ११) इति प्रागुक्तं भवता, तदिदानीं कथं प्रतिपत्तव्यं प्रधानमपि त्रिगुणादियुक्तमिति । उच्यते—**कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ।** इह कारण[ 50a ]गुणात्मकं कार्यं दृष्टम्, पटादिव्यक्ते च

1 Māṭhara accepts this reading, but Vācaspati reads—अविवेक्यादेः सिद्धिस्त्रैगुण्यात् तद्विपर्ययेऽभावात्.

2 See notes on p. 70.

त्रैगुण्याद्युपलभ्यते। तस्मात् कारणमप्यस्य तथाजातीयकमिति शक्यमनुमातुम्। सिद्धान्तमात्रोपदर्शनमेतदाचार्यः करोति। न्यायं तु यथोक्तेषु प्रदेशेषूपपादयिष्यामः।

आह—कार्यधर्मस्य कारणोपलब्धौ हेतुमदादिप्रसङ्गः—अविशेषात्। यदि कार्ये दृष्टस्य धर्मस्य कारणे सद्भावोऽभ्युपगम्यते प्राप्तो हेतुमदादीनामपि धर्माणां कार्य-दृष्टत्वात् प्रधाने प्रसङ्गः। अथ कार्योपलब्धौ तुल्यायां हेतुमदादयो नेष्यन्ते न तर्हीतरेषामपि कारणावस्थितिरस्तीति। उच्यते - न, स्वरूपविरोधित्वे तदपवादविज्ञानात्। कारणगुणात्मकत्वात् कार्यस्येत्यनेन लिङ्गेन हेतुमदादयोऽपि कारणे प्रसज्यन्ते। तेषां तु कार्यकारणरूपविरोधित्वादपवादो विज्ञायते। कथम्? यदि तावद्धेतुमदादयो व्यक्ते दृष्टत्वात् प्रधाने व्यज्यन्ते कृतकत्वात् कार्यमेव तत्र कारणमिति प्राप्तम्। अनित्यत्वाच्च स्वयमुच्छिद्यमानमननुग्राहकमव्यापित्वादिभिश्चानन्तविकारोत्पादनशक्तिहीनम्। अहेतुमदादयः प्रधानेऽभ्युपगमाद् व्यक्तेरपि प्राप्यन्ते तादृशाः, कारणासम्भवात् कार्यमेव तत्र भवतीति प्राप्तमविवेक्यादयस्तूभयत्रापि भवन्तो नेतरेतरस्वरूपविरोधिनः। तस्मात् कार्यकारणभावाभ्युपगमाद्धेतुमदाद्यपवाद इतरेषां च कारणसद्भावः सिद्धः।

यदुक्तं कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धमिति तदयुक्तम्। कस्मात्? व्यक्ताव्यक्तयोः कार्यकारणभावाप्रसिद्धेः। सिद्धे हि व्यक्ताव्यक्तयोः कारणत्वे एतदेव स्यात्, तत् त्वसिद्धम्; तस्मादयुक्तमेतत्। विशेषानभिधानादुभयसाम्यमिति चेत्, स्यान्मतम्—यथा भवानाह व्यक्ताव्यक्तयोः कार्यकारणभावोऽप्रसिद्धः, [ **50b** ] एवं वयं वक्ष्यामः—तयोः कार्यकारणभावाप्रसिद्धिरप्यसिद्धा। न च क्वचिद् विशेषोऽस्त्युभयसाम्यं भविष्यतीति। तच्चायुक्तम्। कस्मात्? सद्-भावासिद्धेः। सत्यम्—अनभिधीयमाने विशेषे स्यादुभयसाम्यम्, अव्यक्तस्य तु सद्-भाव एवासिद्ध इत्ययं विशेषः। तस्मादयुक्तमेतदपीति कार्यकारणपूर्वकत्वाद् व्यक्तस्य च कार्यत्वादव्यक्तसद्भावे प्रतिपत्तिरिति चेत्, स्यादेतत्—कार्यं कारणपूर्वकं दृष्टम्। घटादिकार्यं चेदव्यक्तं प्रमितत्वात् तस्मादिदमपि कारणपूर्वकं भवितुमर्हति, यच्च तस्य कारणं तदव्यक्तमिति। तच्चानुपपन्नम्। कस्मात्? अनेकान्तात्। इहाकस्मिकी च कार्यस्योत्पत्तिर्दृष्टा। तत् यथेन्द्रधनुषः। असतश्च भ्रान्तिमात्रात्, तद् यथा मायास्वप्नेन्द्रजालमृगतृष्णिकाऽलातचक्रगन्धर्वनगराणाम्। सतश्च कारणात्, तद् यथा—मृदादिभ्यो घटादीनाम्। कार्यश्चेदव्यक्तमतः संशयः, किमिन्द्रधनुर्वदकस्मादस्य प्रादुर्भावोऽथ मायादिवदसतोऽथ कारणात् सतो घटादिवदिति। उच्यते—नाकस्मिकमसत्पूर्वं व्यक्तम्। कस्मात्—

[ भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥ ]



**भेदानां परिमाणात्।** यत् परिमितं तस्य सत उत्पत्तिर्दृष्टा। तद् यथा, मूलाङ्कुर-पर्ण-नाल-दण्ड-बुष-तुष-शूक-पुष्प-क्षीर-तण्डुलकणानाम्। परिमिता महदहङ्कारेन्द्रिय-तन्मात्र-महाभूतलक्षणभेदाः, तस्मात् कारणपूर्वकाः। यदेषां कारणं तदव्यक्तम्।

इति श्रीयुक्तिदीपिकायां सांख्यसप्ततिवृत्तौ तृतीयमाह्निकं
प्रथमञ्च प्रकरणं समाप्तम्।

तथैको नैक इति, तस्माद् भ्रान्तिमात्रं पुरुषकल्पनेति । एतदनुपपन्नम् । कस्मात् ? सर्वपदार्थाभावप्रसङ्गात् । रूपादिष्वपि प्रतिपत्तेः—केषाञ्चित् क्षणिकाः, केषाञ्चित् कालान्तरावस्थायिनः ; तथाऽऽश्रिताः स्वतन्त्रा इत्यादि । तथा श्रोत्रादीनि भौतिकानि, आहङ्कारिकाणि, पौरुषाणीति विप्रतिपत्तिरेवं सर्वपदार्थाभावः स्यात् ; तस्मादस्ति पुरुषः । तन्न युक्तं सर्वप्रमाणानुपलब्धेर्नास्ति पुरुष इत्येतदयुक्तम् । यदप्युक्तम्, शून्यमाध्यात्मिकं पश्येति तस्य पश्चात् प्रतिषेधं वक्ष्यामः । यत् पुनरेतदुक्तम्, अस्ति कर्मास्ति विपाकः कारकस्तु नोपलभ्यत इति सत्यमेतत् । न हि पुरुषस्कन्धानां निक्षेपे प्रतिसन्धानेऽन्यत्र वा कारक इति नः पक्षः । [ 70a ] तस्माच्छ्रेयो(र्थि)भिः सर्वागमतर्कविरुद्धं नैरात्मवादपरिकल्पनाभ्रान्तिमसमञ्जसामपोह्य पुरुष-स(त)त्त्वपरिज्ञानादेव जननमरणादिसर्वोपद्रवप्रतिपक्षभूतं परममृतं ध्रुवं स्थानमवाप्तव्यमिति ।

आह—गृह्णीमहे तावदस्त्ययमात्मेति, इदानीमनेकोऽथैक इति विचार्यम् । कुतः संशय इति चेत्—सम्बन्धिनामुभयथा दृष्टत्वात् । इह कस्यचिदनेकस्यानेकेन सम्बन्ध उपलभ्यते । तद् यथा श्रोत्रादिना शरीरस्य । कस्यचिदेकस्यानेकेन । तद् यथा—आकाशस्य घटादिना । अयमपि चात्मा कार्यकारणसम्बन्धीत्यतः संशयः किं श्रोत्रादिवदनेक आकाशवदेको वेति । किञ्चान्यत्—आचार्यविप्रतिपत्तेः । औपनिषदाः खलु एकश्चात्मेति प्रतिपन्नाः । काणादाक्षपादार्हतप्रभृतयः पुनरनेक इति । यथा चैकानेकत्वं प्रत्यात्मनो विप्रतिपत्तिरेवं साक्षित्वौदासीन्यद्रष्टृत्वाकर्तृत्वेषु । तस्माद् वक्तव्यं कथमेते धर्माः पुरुषेऽवतिष्ठन्त इति । उच्यते—यत्तावदुक्तं सम्बन्धित्वादात्मपदार्थे सन्देहः किमनेकोऽथैक इति, अत्र—ब्रूमः बहवः पुरुषा इति प्रतिज्ञा । कस्मात्—

[ जनन-मरणकरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥ ]

**जनन-मरण-करणानां प्रतिनियमात् ।** जन्मेति महदादेः सूक्ष्मशरीराश्रितस्य लिङ्गस्य यथासंस्कारं बाह्येन शरीरेण सम्बन्धः । मरणमिति पूर्वकृतस्य कर्मणः फलभोगपरिसमाप्तेः, साम्प्रतस्य च फलभोगस्य प्रत्युपस्थाने लिङ्गस्य पूर्वशरीरत्यागः । 'करणं त्रयोदशविधम्' ( का, ३२ ) इति वक्ष्यति । जन्म च मरणं च करणानि च—जन्ममरणकरणानि, तेषां प्रतिपुरुषं नियमः । एतस्माल्लिङ्गादात्मनो बहुत्वमवसीयते । एतदुक्तं भवति—जन्मलक्षणश्च मरणलक्षणश्च कार्यकारणस्यावस्थाऽन्तरं परस्परविरोधि, तमःप्रकाशवत् । तत्र यद्येक आत्मा [ 70b ] स्यात् तेन यथैकं



द्रव्यं तमःप्रकाशावेकप्रदेशोपनिपातिनौ न शक्तोऽप्यनुभवितुमसम्भवात्, एवमयं जन्ममरणेऽपि न शक्नुयादुपभोक्तुम् । अस्ति चायं केनचित् कार्यकरणेन जन्मोपभोगः केनचिन्मरणोपभोगः । तेन मन्यामहे नाना आत्मानः, येषां विरोधि-धर्मोपभोगसामर्थ्यमिति । तथा करणानां प्रकाशातिशयो विषयग्रहणलक्षणोऽशुद्ध्यतिशयश्चाष्टाविंशतिधाऽशक्तिः, तयोः परस्परविरोधादेकेनात्मना युगपदुपभोगो नोपपद्यते । न हि शक्यमेकेनात्मना प्रकाशातिशयो विषयग्रहणलक्षणोऽशुद्ध्यतिशयश्चाशक्तिलक्षणो विरोधित्वात् युगपदुपभोक्तुम् । अस्ति चायं करणनिमित्तः प्रतिपुरुषं नियमः, तेन मन्यामहे नाना आत्मान इति ।

किञ्चान्यत्—**अयुगपत् प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम् ।** कस्मात्—अयुगपत् प्रवृत्तेः, प्रधानस्येति शेषः । यस्य प्रवृत्तिरुपपद्यते – कस्य प्रवृत्तिरुपपद्यते प्रधानस्य, कथमित्युच्यते । यद्येक आत्मा स्यात् तेनैकपुरुषाधिकारनिबद्धं प्रधानम् । शक्तश्चासौ युगपदनेकानि शरीराणि उपभोक्तुमित्यतो यावद्भिः शरीरैरपचितासु कालमात्रास्वस्मिन् भवपरिवर्ते भवितव्यं सर्वेषामुत्पत्तिं प्रति युगपत् प्रवर्तेत । दृष्टा तु प्रधानस्य अयुगपच्छरीरभावेन प्रवृत्तिः । तस्मादयुगपत् प्रवृत्तेश्च नाना आत्मान इति । अन्ये पुनराहुः—बहिष्करणानामेवायुगपत् प्रवृत्तेः । कथम् ? यद्येक आत्मा स्यात् तेन तत्संस्कारोपनिबद्धान्येव सर्वाणि करणानीत्यतः प्रतिपिण्डमवस्थितैः करणैर्युगपद् विषयान् गृह्णीयात् । वाधिर्याद्युपघाते वा सति पिण्डान्तरसम्बन्धिना करणेनान्यस्य शब्दादिकरणमप्रतिषिद्धं स्यात्, न तु तथा भवति । तस्मात् करणानामयुगपत् प्रवृत्तेर्नाना आत्मान इति । तदयुक्तम् । [ 71a ] कस्मात् ? पूर्वेणाविशेषात् । करणानां प्रतिनियमादित्यनेनायमुपसंगृहीतोऽर्थः । तस्माद् यथोक्तमेवास्तु ।

किञ्चान्यत्—**त्रिगुणादिविपर्ययाच्चैव ।** इह—त्रिगुणमविवेकिविषयः सामान्यमचेतनं प्रसवधर्मीत्येते धर्माः प्रतिपिण्डमुपलभ्यन्ते । यथा चैते तथा तत्प्रतियोगिनो नैर्गुण्यादयः पुरुषधर्माः । तत्र यथैव गुणस्वभावविपरीत-स्वभावस्योपलम्भादेकस्मात् पिण्डादेकपुरुषसिद्धिः, एवं प्रतिपिण्डं गुणस्वभाव-विपरीतस्वभावस्योपलम्भात् पुरुषनानात्वमवसेयम् । तस्मादवस्थितमेतन्नाना आत्मान इति ।

आह—सिद्धमात्मनो नानात्वम् । साक्षित्व-कैवल्य-माध्यस्थ्य-द्रष्टृत्वाकर्तृत्वानामिदानीं कस्माद्धेतोः प्रतिपत्तिरित्युच्यते ।

**तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

तस्मादित्यनेन हेतुसामान्यमाचष्टे। च-शब्दोऽवधारणे। विपर्यासादिति सामान्येन हेतुमुपात्तं विशेषेऽवस्थापयति। सिद्धं साक्षित्वमस्य पुरुषस्येत्येवमादिना साध्यधर्मनिर्देशं करोति। तत्र साक्षित्वमित्यनेन गुणानां प्रवृत्तावस्वातन्त्र्यं ख्यापयति—प्रधानस्य तदर्थनिबन्धनत्वात् प्रवृत्तेः। अधिष्ठातृत्वं कथमित्युच्यते—यथा क्रियासाक्षिणि कस्मिंश्चिदवस्थिते कर्ता तदिच्छाऽनुविधायि कार्यं निर्वर्तयति, न स्वतन्त्रः, एवं प्रधानमपि। प्रवृत्तिनिवृत्त्योर्यथा पुरुषस्यार्थः सिध्यति तथा महदहङ्कार-तन्मात्रभूत-देवमनुष्य-तिर्यक्स्थावरभावेन व्यूहते, न यदृच्छातः। तस्मात् पुरुषस्तदर्थपरतन्त्रत्वात् प्रधानप्रवृत्तिनिवृत्त्योः साक्षी, कैवल्यमित्यनेन संसर्गधर्मत्वमात्मनो निवर्तयति, न यथा सत्त्वादीनां परस्परेण प्रकाशादिधर्मापेक्षाणां संसर्ग एवं पुरुषस्य तैर्भवति। माध्यस्थमित्यनेनातिशय-निर्ह्रासा[ 71b ]नुपपत्तेः। पुरुषस्य गुणैः सह बाधानुग्रहानुपपत्तिं स्वकार्यप्रवृत्तौ चापक्षपातं दर्शयति। द्रष्टृत्वमित्यनेनोदासीनस्य कार्यकारण-पिण्डव्यूह-समकालं चैतन्यशक्तिसद्भावात् सुखदुःखमोहस्वभावानां गुणचेष्टानामनिवृत्तार्थानां सन्निधानमात्रादुपलब्धिमात्रं प्रतिजानाति। अकर्तृभावश्चेत्यनेन सप्तविधमकर्तृभावमाश्रयति। न ह्ययं विषयेषु स्वस्यान्तःकरणसान्निध्येऽध्यवसायं कुरुते। न च सत्त्वादीनां प्रकाशप्रवृत्तिनियमलक्षणैर्धर्मैरितरेतरोपकारेणाप्रवर्तमानानां स्वेन चैतन्यलक्षणेन धर्मेणाङ्गभावं प्रतिपद्यते नाप्यङ्गिभावम्। एवं सह गुणैः कार्यं न कुरुते स्त्रीकुमारवत्, स्थितप्रयोगं न कुरुते रथशकट-यन्त्रप्रेरकवत्, न स्वात्मनो मृत्पिण्डवत्, न परतः कुम्भकारवत्, नाप्यादेशात् मायाकारवत्, नोभयतो मातृपितृवत्। तदेवमनेन सूत्रेणाचार्यः पुरुषस्याधिष्ठातृत्वं नैर्गुण्यमौदासीन्यं भोक्तृत्वमकर्तृत्वञ्च साध्यतामापाद्य त्रिगुणादिविपर्ययं साध्यत्वेनोपन्यस्यति। तैः पञ्चभिस्त्रिगुणादिविपरीतैः कर्मभिः पञ्चानामेषां यथासम्भवं प्रवृत्तिरवगन्तव्या। यत्र नैर्गुण्यात् साक्षित्वम्, यस्मादयं सुखादिम्योऽर्थान्तरभूतः तस्मादयं सुखादिभ्योऽर्थान्तरम्; तस्मात् तत्क्रियासाक्षी।

आह—तदसिद्धेः—नैर्गुण्यासिद्धेः। यद्यस्य सुखादिधर्मत्वमात्मनः प्रसिद्धं स्यादत एतद् युज्यते वक्तुम्, तत् त्वसिद्धम्। तस्मादयुक्तमेतत् विशेषानभिधानादितरात्। सिद्धिरपीति चेत्, स्यान्मतम्—आत्मगुणाः सुखादयो न शब्दगुणा इत्यत्रापि भवता विशेषो नाभिधीयते, तस्मादेतदप्यसिद्धम्। एतदप्ययुक्तम्—कस्मात्? अहङ्कारेणैकवाक्यत्वे भिन्नाधिकरणत्वं स्यात्। [ 72a ] दृष्टं तु सुखितोऽहं दुःखितोऽहमिति; तस्मात् सुखदुःखयोः शब्दाद्यात्मभावो न युक्तः। उच्यते—न, गौरादिष्वनेकान्तात्।



तद् यथा—गौरः कृष्णोऽहमिति शरीरधर्मैरात्मनो भिन्नाधिकरणत्वमहङ्कारेण, एवं सुखदुःखयोरपि स्यात्। न चात्मगुणत्वं स्यादिति।

आह—पृथगुपलब्धेरयुक्तम्। यद्यपि गौरादीनामविभक्तमहङ्कारेण ग्रहणं तथाऽपि पृथगयं प्रागेतानात्मनो गृहीत्वा पश्चादविभक्तान् गृह्णन् शक्तोऽति(?) व्यवस्थापयितुममुष्यैते न पुनरमुष्येति, न त्वेवं सुखदुःखयोः पृथगुपलब्धिः। तस्मादसदेतदिति। उच्यते—नैवमुपपद्यते। कस्मात्? मार्गान्तरगमनात्। अहङ्कारेणाविभक्तग्रहणादात्मगुणत्वमिति प्रागपदिष्टम्। इदानीं तु सत्यपि तस्मिन् पृथग्ग्रहणादभावं ब्रुवतो मार्गान्तरगमनमनैकान्तिकस्य चापरिहारः। किञ्चान्यत्—संशयाव्यतिरेकात्। यत एव गौरादयः पृथगुपलभ्यन्ते न सुखादयोऽत एव संशयः। न च यत एव संशयस्तत एव निर्णयो युक्तः। तस्माद् युक्तमेतद् गौरादिवत् अहङ्कारेणाप्यभिन्नग्रहणात् शब्दाद्यात्मभूताः सुखादयः। किञ्चान्यत्—स्वभावानवधारणादनुपादान-प्रसङ्गात्। सुखाद्यात्मकाः शब्दादय इत्येवं ब्रुवतः शब्दादीनां स्वभावानवधारणादनुपादानप्रसङ्गः। निमित्तत्वेनोपादानादग्निवददोष इति चेत्, स्यान्मतम्—यथाऽग्निः पाकजनिमित्तमुपादीयते, अथ चैषां पार्थिवत्वमेवं शब्दादयोऽपि सुखादिनिमित्तत्वेनोपादीयेरन्, अथ चैषामात्मगुणत्वमेवस्यादिति। तदप्यनुपपन्नम्। कस्मात्? सामानाधिकरण्यदर्शनात्। यथा निमित्तस्याग्नेर्न पाकजैः सामानाधिकरण्यं पक्वोऽग्निः पच्यतेऽग्निरिति, एवं शब्दादीनां निमित्तत्वान्न सामानाधिकरण्यं स्यात्। सुखशब्दो [ 72b ] दुःख इति दृष्टं तु। तस्मान्न तेषां निमित्तार्थेनोपादानमिति।

आह—एवमपि सुखादीनां शब्दाद्यात्मभावो न युक्तः। कस्मात्? विप्रतिपत्तेः। यथा हि शब्दाः शब्दात्मका इति सर्वैः शब्दरूपेण गृह्यन्ते, एवं सुखात्मकोऽयमिति सर्वैस्तद्रूपेण गृह्यते। दृष्टा तु विप्रतिपत्तिः, तस्मादात्मगुणा इति। उच्यते—न, संस्कारविशेषनिमित्तत्वात्। तद् यथा—पित्तादिसामर्थ्यात् माधुर्यादिषु विप्रतिपत्तिः। न चैषामशब्दादिगुणत्व-संस्कारविशेष-योगात् सुखादिषु विप्रतिपत्तिः, न चैषामशब्दादिगुणत्वमिति। किञ्चान्यत्—निमित्तत्वेऽपि तत्प्रसङ्गात्। निमित्तवादिनोऽप्येतत् समानम्। न हि निमित्तनैमित्तिकयोर्विप्रतिपत्तिरस्ति। तद् यथा—प्रदीपप्रकाशयोः। ततश्च विप्रतिपत्तेर्निमित्तत्वमपि शब्दादीनामकल्पनीयं स्यात्। यश्च द्वयोर्दोषो न तमेकश्चोद्यत इति। आत्मगुणाकाङ्क्षित्वाददोष इति चेत्, स्यान्मतम्—निमित्तमप्रधानत्वादन्यपरिपाकवशेन सुखदुःखेनोत्पादयत्यात्मनः। तन्मयत्वे तु निराकाङ्क्षत्वात् प्रधानस्य व्यवस्थाभेदो न युक्त इति। तच्च नैवम्। कस्मात्? उक्तत्वात्। तन्मयत्वेऽपि

गुणभावात् माधुर्यादिषु विप्रतिपत्तिरित्यादावेवोक्तमेतत्, तस्मात् तन्मयत्वे प्राधान्यमिति चानिश्चिताभिधानमेतत्।

आह- एवमप्ययुक्तमेतत्। कस्मात्? अतीतानागतेष्वपि तु दृष्टेः। तस्मात् सुखादीनां शब्दाद्यात्मभावो न युक्त इति। उच्यते—न, स्मृतिनिमित्तत्वाद् बुद्धेः। अयमतीतानागतेष्वपि शब्दादिषु स्मार्तसुखदुःखयोगो भवति। तत्संपर्कात्तु पुरुषेण तथाऽनुभूयते। पुरुषगुणत्वे तु पाकजवत् निमित्तादुत्पन्नानां सुखादीनां विशेषभावात् तीव्रमन्दताऽनुपपत्तिः स्यात्। तस्मात् सुखदुःखयोः शब्दाद्यात्मभावो न युक्तः। किञ्चान्यत्—[ 73a ] अनिर्मोक्षप्रसङ्गात्। द्रव्यस्य गुणैरविप्रयोगात् सुखदुःखयोरात्मगुणत्वे सत्यात्मन स्ताभ्यामनिर्मोक्षप्रसङ्गः। तस्मात्तयोरात्मगुणत्वमयुक्तमिति। श्यामादिवत् तद्विनिवृत्तिरिति चेत्, स्यान्मतम्- यथा श्यामगुणत्वे सत्यणो रग्निसम्बन्धात् तद्विनिवृत्तिः, शब्दादिगुणत्वे चाकाशस्याशब्दकस्यावस्थानमेवमात्मनोऽपीति। एतदयुक्तम्, कस्मात्? विशेषोपादानप्रसङ्गात् साध्यत्वाच्च। यथा ह्यणुः श्यामतां परित्यज्य रूपविशेषमेव रक्तलक्षणमुपादत्ते, न रूपवत्तां त्यजति; एवमात्मापि बाह्यनिमित्तसामर्थ्यात् सुखान् सुखान्तरं दुःखात् दुःखान्तरमुपाददीत, न ते अत्यन्तं जह्यात्। तथाऽऽकाशं शब्दलक्षणं कस्याञ्चिदवस्थायाम् अशब्दकं भवतीत्यस्मात् प्रतिसाध्योऽयमर्थः। भेदादिशब्दास्तु तद्-गुण एवेति प्रतिपादयिष्यामः। तस्मात् सुखदुःखयोः शब्दाद्यात्मभावो युक्तः। एवमनामिश्ररूप आत्मा। ततश्चेच्छा-द्वेष-प्रयत्न-धर्माधर्म-ज्ञान-संस्काराणामनेकस्वभावानां परस्परविरोधिनां च तद्-गुणत्वमनुपपन्नम्। तस्माद् युक्तमेतत् निर्गुण आत्मा, नैर्गुण्याच्च साक्षिमात्र इति केवलो विविक्तत्वात्। तस्मादयं गुणेभ्यः पृथगभूतः। तस्मात् केवलः, न तैः सह संसर्गेण वर्तते।

आह—कः पुनरस्यात्मनो गुणेभ्यः पृथग्भावोऽभिप्रेत इति। उच्यते—तदुपकारनिरपेक्षाणां सत्त्वादीनां स्वकार्यसामर्थ्य-पृथग्भावः। न हि सत्त्वादयः प्रकाशादिभिर्धर्मैरितरेतरोपकारेण वर्तमानाः पुरुषकृतमुपकारमपेक्षन्ते, प्रकाशादिधर्म-सन्निधानमात्रादेव तु प्रवर्तन्ते। तथा च वा र्ष ग णाः पठन्ति—"प्रधानप्रवृत्तिरप्रत्यया पुरुषेणापरिगृह्यमाणाऽऽदिसर्गे वर्तन्ते" इति। यस्माद् गुणास्तदुपकार-निरपेक्षाः प्रवर्तन्ते तस्मादसावपि तत्संसर्गं नानुभवति। दृष्टा तु लोकेऽप्येककार्यत्वात पृथक् पृथग्भावपरि[ 73b ]कल्पना च। तद् यथा—इमे भ्रातरः पृथक्, एषां नैकं कार्यम्, न पृथगिमे येषामेकमिति। मध्यस्थो विषयित्वात्। यस्मादयं पुरुषो विषयी तस्मात् मध्यस्थः। किं कारणम्? विषयाणां ह्यतुल्यबलत्वात् न्यूनातिशयोपपत्तेश्च। परस्परेण बाधानुग्रहावुप-



पत्तौ विषयी चायम्, तस्मान्नास्ति न्यूनताऽऽद्युपपत्तिः; ततश्चेतनाभावः। न चामिश्ररूपत्वात् सङ्गद्वेषौ गुणविषयौ, अतो मध्यस्थः। द्रष्टृत्वं चैतन्यात्, प्रकृतिविकारभूतत्वात् सत्त्वादिभ्यश्चैतन्यमपोद्धृत्य पुरुषे व्यवस्थापनीयम्। न चाचेतनानां द्रष्टृत्वमुपपद्यते इत्यतः पुरुष एव चैतन्यात् द्रष्टा, नान्यत् तत्त्वान्तरम्। अकर्तृभावः अप्रसवधर्मित्वात्। प्रसवार्थो धर्मः—प्रसवधर्मः, सोऽस्यास्तीति प्रसवधर्मी। कः पुनरसौ प्रसवार्थो धर्म इति। उच्यते—प्रस्यन्दनपरिणामौ। निष्क्रियत्वादकर्तेति यावत्। तदिदमप्रसवधर्मित्वात् अकर्तेति। कथमस्य निष्क्रियत्वमिति चेत्, चैतन्यात्। अचेतनानां हि क्षीरादीनां क्रियावत्त्वमुपलब्धम्, चेतनस्य न कस्यचिदित्यतो निष्क्रियः पुरुषः। किञ्च, अनामिश्ररूपत्वात्। आमिश्ररूपं हि क्रियादिमत् क्षीरादि, अनामिश्ररूपश्चायम्। तस्मान्निष्क्रियः। विभुत्वादिति चेत्, स्यादेतत्--यथा विभुत्वे सति प्रधानस्य सक्रियत्वमेवं पुरुषस्य सति विभुत्वे सक्रियत्वेन भवितव्यमिति। तच्च नैवम्। कस्मात्? धर्मद्वयसहितस्य साहचर्योपलब्धेः। तद् विभुत्वमाचेतन्यानेकरूपत्वसहितं क्रियावति दृष्टं न केवलम्। न तु तथा पुरुषे। तस्माद् विषममेतत्। एवं निष्क्रियः पुरुषः, निष्क्रियत्वाच्च प्रधानात् कार्यकरणं न कुरुते। कस्मात्? क्रियावतः कुम्भकारस्य मृत्पिण्डात् कार्यनिष्पत्तिसामर्थ्यदर्शनात्। स्यादेतत्—....... तस्यान्येन स्थितिं कुरुते धात्रीकुमारवत्। [ 74a ] स्थितस्य वा प्रयोगं रथशकटयन्त्र-प्रेरकवदिति। एतदप्यनुपपन्नं पूर्वस्मादेव हेतोः। अथापि स्यात् स्वतः पुरुषः कार्यकरणं कुरुत इति, तदप्ययुक्तं चेतनाचेतनयोरत्यन्तभेदात् प्रकृतिविकारभावानुपपत्तेः। अथ मतमुभयत इति, तदपि नैव सम्भवति, उभयदोष-प्रसङ्गात्। स्यात् पुनरेतत्—अव्यपदिश्य योनिं पुरुषोऽभिध्यानमात्रेण कार्यकरणं कुरुते इत्यसदेतत्। कस्मात्? अनुत्पत्तावभिध्यानानुपपत्तेः। ईश्वरकारणप्रतिषेधेऽभिहितं प्राक् प्रधानविपरिणामात् बुद्धिमतो बुद्धिर्नास्ति। न च बुद्धिमन्तरेणाभिध्यानमुपपद्यते तद्-वृत्तिभूतत्वात्। तथा बुद्धिमत्पूर्वकसृष्टि-प्रतिषेधः कृतः, स इहापि योज्यः। अध्यवसायकर्तृत्वं च प्राक् प्रतिषिद्धम्। एवं सप्तविधेनाकर्तृत्वेनाकर्ता पुरुषः। उक्तञ्च—

"नाध्यवसायं कुरुते पुरुषो नैव स्थितिं प्रयोगं वा।
न स्वात्मनो न परतो नाव्यपदेशात् न चोभयतः॥"

तद् युक्तमेतत्—

तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थं द्रष्टृत्वमकर्तृभावश्चेति॥

यतश्चेतनाशक्तिसम्बन्धात् पुरुष एव द्रष्टा नान्यत् तत्त्वान्तरम्, गुणाश्च कर्तारो न पुरुषः।

**तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।**
**गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥**

पुरुषसम्पर्काद्धि ग्रहण-धारण-विज्ञान-वचनोहापोहक्रिया यथान्यायाभिनिवेशानां करणधर्माणां प्रत्ययरूपाणामिवोपलब्धेश्चेतनाशक्तेश्चाध्यवसायवृत्तिमनुरुध्यमानायास्तद्भाव-सन्निवेशिनां सत्त्वादीनां व्यापारवतामभिसम्बन्धाद् व्यापाराविष्टाया इवोपलब्धिः । यतस्तत्रायम् अनेककालप्रवृत्तमिथ्याप्रत्ययाभ्यासवासनापेक्षो भवबीजहेतुर्ज्ञानविशेषः प्राणभृतामवभासते । श्रोत्रमुपलभ्यते त्वक् चक्षुर्जिह्वा घ्राणमित्यादि । तथा पुरुषः [ 74b ]कर्मणां कर्ता पुरुषः सुखदुःखयोरिति । तस्मात् कारणस्य ग्रहणरूपता पुरुषस्य च कर्तृरूपता, सम्बन्ध्यन्तरसम्पर्कादन्यगताऽन्यत्रोपलभ्यमाना भक्त्याऽध्यवसातव्या, न परमार्थतः । उक्तञ्च—

"चेतनाधिष्ठिता बुद्धिश्चेतनेव विभाव्यते ।
कर्तृष्ववस्थितश्चात्मा भोक्ता कर्तेव लक्ष्यते" ॥

आह—संयोगात् पररूपताऽऽपत्तावतिप्रसङ्गः, अविशेषात् । यदि चेतनसंयोगात् बुद्ध्यादीनां प्रत्ययवदुपचारः, व्यापित्वादस्य घटादिभिरपि संयोगो न प्रतिषिध्यत इत्यतः प्राप्तस्तेषामपि प्रत्ययवदुपचारः । अथ संयोगाविशेषात् करणानामेव प्रत्ययवदुपचारो न घटादीनां विशेषस्तर्हि वक्तव्य इति । उच्यते—तदप्रसङ्गः शक्त्यपेक्षत्वात् स्फटिकादिवत् । यथोपधानसंयोगविशेषे सत्याकाशस्फटिकयोः स्फाटिकमेवोपधानसरूपं प्रत्यवभासते शक्तितो नाकाशम्, एवं पुरुषसंयोगाविशेषे बुद्धिघटयोः शक्तितो बुद्धिरेव चेतनारूपापन्नेवोपलभ्यते न घटः ।

आह—पुरुषस्य विकार्यत्वप्रसङ्गः, रूपान्तरोपादनात् । यदि तर्हि करणसम्बन्धात् पुरुषः कर्तृत्वोपचारं विषयसरूपताञ्च प्रतिपद्यते प्राप्तमस्यापि स्फटिकवद् रूपान्तरोपादानाद् विकार्यत्वम्, अथ नास्य विषयरूपापत्तिः, न तर्हि करणस्य रूपं पुरुष इति, उच्यते—न, भक्तितोऽभ्युपगमात् । बुद्धिरुपात्तविषयेन्द्रिय-वृत्त्युपनिपाता सा द्रव्यं प्रतिपद्यते, बुद्धिरूपन्तु सन्निधानमात्राच्छक्तिविशेषयोगात् फलभोक्तृत्वाच्च राजनि भृत्य-जयपराजयोपचारवत् पुरुषे उपचर्यते ; न त्वसौ बुद्धिसम्पर्कात् तद्रूपो भवति । अत एवास्य सत्यां चेतनाशक्तौ व्यवसायकर्तृत्वं प्रतिषिध्यते, मा भूत् विषयरूपापत्तौ सत्यामनेकस्वभावत्वाद्विकार्यत्वप्रसङ्गः । तस्माद् विषयसम्पर्कादस्य विकार्यः पुरुषः, न ह्यस्य नित्यत्वात् किञ्चिदनुग्रहाय नापघाताय । [ 75a ] आह च—



"मुष्टिर्यथा विकीर्णः सूच्यग्रे सर्षपादीनाम् ।
तिष्ठति न सूक्ष्मभावात् तद्वद् द्वन्द्वानि सर्वज्ञ ॥" इति ।

चेतनाशक्तियोगात्तु द्रष्टृत्वमस्य स्वाभाविकम् । एवञ्चेद् यदुक्तम्—

"वर्षाऽऽतपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोःफलम् ।
चर्मोपमश्चेत् सोऽनित्यः [1]खतुल्यश्चेदसत्समः ॥" इति ।

तदुक्तम् । किं कारणम् ? यस्मादविकार्य्यरूपस्याकाशस्य सन्निधानमात्रात् मेघपयोरजोधूमप्रभृतिभिरभिन्नदेशत्वादत्यन्तशुद्धस्यापि मलिनमिव रूपमुपलक्ष्यते, न च विकार्य्यत्वम् ; एवमात्मनोऽपि स्यात् । तद् युक्तमेतत् पुरुषसंयोगात् कारणस्य प्रत्ययोपचारः पुरुषस्य च गुणसंयोगात् कर्त्तृत्वोपचार इति ।

आह - अयुक्तमेतत् । कस्मात् ? संयोगानुपपत्तेः । पुरुषस्य हि गुणानाञ्च संयोगः परिकल्प्यमानोऽन्यतरकर्मजो वा परिकल्प्यते यथा स्थाणुश्येनयोः, उभयकर्मजो वा यथा मेषयोः, संयोगजो वा द्व्यङ्गुलाकाशयोः, स्वाभाविको वा यथा अग्न्युष्मयोः, शक्तिनिमित्तो वा यथा चक्षरूपयोः, योग्यतालक्षणो वा यथाङ्गुष्ठोपानद् द्रव्ययोः, यादृच्छिको वा यथा श्वभ्र-तत्पातिनोः, विषयविषयिनिमित्तो वा यथा मत्स्योदकयोरिति । तत्र तावदन्यतरकर्मज उभयकर्मजश्च संयोग एषामुपपद्यते । कस्मात् ? विभुत्वात् । परिच्छिन्नदेशानामप्राप्तौ सत्यामदृष्टः, यथोदाहृतम् । न चैतत् गुणानां पुरुषस्य च सम्भवति विभुत्वात् । न स्वाभाविकः, अनिर्मोक्षप्रसङ्गात् । यथाऽग्नेः स्वाभाविकादौष्मात् मोक्षो न भवति, एवं नात्मनः स्वाभाविकाद् गुणसंयोगादनिर्मोक्षप्रसङ्गः स्यात् । शक्तिनिमित्तश्च किमनिर्मोक्षप्रसङ्गादेव स न भवतीत्यनुवर्त्तते । स्वस्वामि-शक्तिनिमित्ते हि संयोगे परिकल्प्यमाने शक्त्योः सततावस्थानादनिर्मोक्ष एव प्रसज्येत, योग्यता-ल[75b]क्षणः शक्तिमात्ररूपत्वादसंवेद्यमतस्तदसिद्धिः । किञ्च प्रयोजनान्तरानुपपत्तेः, प्रवृत्त्यनुगुणं हि योग्यमित्युच्यते । तस्या एव तु प्रवृत्तेः पुरुषार्थमुपोह्य निमित्तान्तरं शक्यं कल्पयितुम् । आकस्मिकत्वे च नियमद्वैतानुपपत्तिः । तस्मादयुक्तं पुरुषस्य गुणानाञ्च योग्यतालक्षण-सम्बन्धः । न यादृच्छिकः, मोक्षकारणनियमानुपपत्तेः । संयोगकारणप्रतिद्वन्द्वं कैवल्य-कारणम्, यदि च यादृच्छिको गुणपुरुषसंयोगःस्यात् तस्याज्ञानात् निवृत्तिर्नास्तीति तदर्थस्य अभ्युत्थानस्यानर्थक्यं प्राप्तं विशेषानुपपत्तेश्च करणान्तरं कल्पयितुम् । अत एतदप्ययुक्तमिति । न वैषयिकः, अनिर्मोक्षप्रसङ्गात् । सततमेव हि पुरुषस्य विषयित्वमव्यावृत्तं

---

1 Also read as, खतुल्यश्चेदसतफल :—

गुणानाञ्च विषयत्वमित्यनिर्मोक्षप्रसङ्ग एव स्यात्। एतावांश्च संयोगः परिकल्प्यमानः परिकल्प्येत सर्वथा च नोपपद्यते। तस्मान्न संयोगादित्ययुक्तमभिधातुमिति। उच्यते—संयोगानित्यत्वादिह चौपचारिक-परिकल्पनाददोषः। इहानैकविधः संयोगः। तद् यथा-प्राप्तिपूर्विका प्राप्तिः, यथोदाहृतम् अन्यतरज उभयकर्मजः संयोग इत्यादि ; यत्रासौ न सम्भवति तत्र सन्निधिमात्रसामान्याद् भक्त्या कल्प्यते। तद् यथा—आकाशस्य गवादिभिः। प्रदेशैरिति चेन्न अभावात्, तेऽपि हि निरवयवत्वादाकाशस्य भक्त्या कल्प्यन्ते मा भूत् कृतकत्वानित्यत्व-दोषप्रसङ्गः। तस्मात् प्रदेशोपचारात् कार्यमभ्युपचरितम्। अन्यस्तु शास्त्रीयसंयोगोऽर्थनिमित्तः। तत्रानेकसंयोगोपपत्तेरिह पुरुषान्तःकरणयोरभिन्नदेशत्वात् सन्निधिमात्रसामान्याद् भाक्तं संयोगं परिकल्प्यैवमुच्यत इत्यदोषः। आह विज्ञातं संयोगद्वयम्। अयं त्वन्योऽर्थनिमित्तः शास्त्रीयः संयोगो भवता परिभाष्यते, तत्र वक्तव्यं किमर्थोऽसाविति। उच्यते—

[[1]पुरुषस्य दर्शनार्थः कैवल्यार्थ स्तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥२१॥]

**पुरुषस्य दर्शनार्थः।** दृष्टिर्दर्शनम्, अर्थशब्दो निमित्त [76a] वचनः। दर्शनमर्थोऽस्यासौ दर्शनार्थः, दर्शननिमित्तो दर्शनहेतुः दर्शनकारणम् इत्यर्थः। एतदुक्तं भवति सन्निधानाविशेषे सति आत्मन आकाशादेश्च, यस्मात् दृक्शक्तियुक्तः पुरुषः तस्मात् कार्य्यकारणतामापन्नेन प्रधानेन सह भोक्तृत्वेन सम्बध्यते नाचैतन्यादाकाशादय इति। अथवा अर्थशब्दः फलवचनः, यथा तृप्त्यर्था भुजिक्रिया तृप्तौ सत्यां निवर्त्तते, प्राप्त्यर्था गमिक्रिया प्राप्तौ सत्याम्। एवं पुरुषस्य प्रधानेन दर्शनार्थः संयोगः दर्शने सति निवर्त्तते। तथा च वक्ष्यति—'दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरतैका' (का, ६६) इति।

आह—एवमपि शब्दाद्युपलब्धि समकाले भवति निवृत्तिप्रसङ्गः। किं कारणम्? तस्यामप्यवस्थायां शक्यं वक्तुं दृष्टा प्रकृतिरिति। उच्यते, यद्यप्येतदेवं तथाऽपि यथा पुरुषस्य दर्शनार्थः संयोगः **कैवल्यार्थस्तथा प्रधानस्य**-कैवल्यमिति विवेकपरिच्छिन्नं सत्त्वादिभिरसंसर्गधर्मित्वमात्मनः, सोऽर्थः अस्य सोऽयं कैवल्यार्थः। सत्यपि हि दर्शनाविशेषे प्रधानं पुरुषस्य कैवल्यार्थं प्रवर्त्तते। यदाऽस्य बुद्धिस्तमसोऽङ्गित्वाद् ये गुणाः कार्यरूपापन्नाः शिरःपाण्यादय आध्यात्मिका बाह्याश्च गवादयः कारणरूपापन्नाश्चालोचनक्रिया-संकल्पाभिमानाध्यवसायलक्षणाः सोऽहमित्यविशिष्ट-प्रत्ययोपसंहारं करोति, तदा प्रवर्त्तते एव। यदा त्वन्ये गुणाः प्रकृतिभूता विकारभूताः कार्यभूताः कारणभूता अचेतनाःपरार्थाः अन्योऽहं न प्रकृतिर्न विकृतिर्न कार्यं न कारणं न चेतनः स्वार्थ इति भिन्नप्रत्ययोपसंहारं करोति तदा निवर्त्तते, सोऽयं पुरुषस्य दृक्शक्तिनिमित्तः-प्रधानस्य च कैवल्यावधिपरिच्छिन्नः पुरुषार्थः। सत्यपि पारिभाषिकत्वे **पङ्ग्वन्धवदुभयोरपि संयोगः।** एतदुक्तं भवति, प्रागपि कार्यकारणसम्बन्धात् पुरुषचैतन्यमवस्थितम्। त [76b] द् यथा—अग्नेर्दहनं परशोश्छेदनमसति दाह्ये छेद्ये च न व्यज्यते। तत्सन्निधानसमकालमेव तु व्यज्यत इत्यतः प्रधानमपेक्षते। तथा प्रधानमप्यन्तरेण पुरुषोपकारं स्वकार्यादसमर्थमनिष्पन्नकार्यसमंचेति तमनर्थकं स्यादित्यतः पुरुषमपेक्षते। तत्र साम्याव (स्थ ?) योरितरेतरापेक्षातं सं यो ग म धि का र ब न्ध- मा हु रा चा र्याः। पङ्ग्वन्धदृष्टान्तस्तु नान्तरीयकप्रदर्शनार्थम्। यथा पङ्गुर्नान्तरेणान्धं दृक्शक्त्या विशिष्टेनार्थेनार्थवान् भवति, अन्धश्च नान्तरेण पङ्गुं विशिष्टेनार्थेन ; एवं प्रधानंनान्तरेण पुरुषं कृतमपि कार्यं द्रष्टुं शक्तमनवधिकञ्च प्रवर्तमानं विशेषाभावान्नैव निवर्तते तथा पुरुषः सत्यपि चेतनत्वे नान्तरेण प्रधानमुपलभ्याभावादुपलब्धा भवेदिति प्रधानमपेक्षते, तस्मादितरेतरापेक्षया संयोगत्वे कल्पमाने (?)। यदुक्तम्—

"[1]विना सर्गेण बन्धो हि पुरुषस्य न युज्यते।
सर्गस्तस्यैव मोक्षार्थमहो सांख्यस्य सूक्तता ॥" इति।

तदयुक्तम्। कस्मात्? न ह्यसौ विना सर्गेण न युज्यत इति। आह च—

"दृश्यदर्शनभावेन प्रकृतेः पुरुषस्य च।
अपेक्षाशास्त्रतत्त्वज्ञैर्बन्ध इत्यभिधीयते ॥
एवं विनाऽपि सर्गेण यस्माद् बन्धः पुमान् गुणैः।
तस्माद् विफलतां यातु मनोरथि-मनोरथः ॥"

इति सिद्धः संयोगः।

**तत् कृतः सर्गः**—प्रधानपुरुषयोर्हि भोक्तृभोग्यभावापेक्ष-निमित्तोऽयं तत्त्वसर्गो महदादिः, भावसर्गश्च धर्मादिः, भूतसर्गश्च ब्रह्मादिः प्रवर्तते। सा चापेक्षा पुरुषानन्त्यात् न निवर्तते इत्यतोऽर्थवतीनां हि प्रकृतीनां तदपरिसमाप्तेर्न निवृत्तिरस्ति।

इति श्रीयुक्तिदीपिकायां सप्ततिपद्धतौ पञ्चममाह्निकं
द्वितीयञ्च प्रकरणम्।

1 Vācaspati reads पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य,
2 Māṭhara reads दृष्टाऽहमित्युपरताऽन्या, Also read as उपरमत्यन्या,

[77a] एवं कारणान्तरप्रतिषेधात् प्रकृतेः पुरुषार्थोऽयं व्यक्तभावेन विपरिणाम इति स्थितम्। तत्रेदानीं विप्रतिपत्तिराचार्याणाम्। केचिदाहुः—प्रधानादनिर्देश्यस्वरूपं तत्त्वान्तरमुत्पद्यते ततो महानिति। पतञ्जलिपञ्चाधिकरण-वार्षगणानां प्रधानात् महानुत्पद्यत इति। तदन्येषां पुराणेतिहासप्रणेतॄणां महतोऽहङ्कारो विद्यत इति पक्षः। महतोऽस्मि प्रत्ययकर्तृत्वाभ्युपगमात। अहङ्कारात पञ्च तन्नात्राणीति सर्वे। महतः षड्विशेषाः सृज्यन्ते पञ्च तन्मात्राण्यहङ्कारश्चेति विन्ध्यवासिमतम्। तथाऽहङ्कारादिन्द्रियाणीति सर्वे। भौतिकानीन्द्रियाणीति [1]पञ्चाधिकरणमतम्। एकरूपाणि तन्मात्राणीत्यन्ये एकोत्तराणीति वार्षगण्यः। इन्द्रियाणि संस्कारविशेषयोगात परिगृहीतरूपाणीति केचित् परिच्छिन्न-परिमाणानीत्यपरे. विभूनीति विन्ध्यवासि-मतम्। अधिकरणमपि केचित् त्रयोदशविधमाहुः। एकादशकमिति विन्ध्यवासी। तथाऽन्येषां महति सर्वार्थोपलब्धिः, मनसि विन्ध्यवासिनः। संकलपाभिमानाध्यवसाय-नानात्वमन्येषां, एकत्वं विन्ध्यवासिनः। तथा करणं निर्लिखितस्वरूपं शून्यग्रामनदीकलपम्, प्राकृतवैकृतिकानि तु ज्ञानानि प्रेरकाङ्गसंगृहीतानि प्रधानादगच्छन्ति चेति पञ्चाधिकरणः, न तु तथेत्यन्ये। करणानां महती स्वभावातिवृत्तिः प्रधानात् स्वल्पा च स्वत इति वार्षगण्यः, सर्वा स्वत इति पतञ्जलिः, सर्वा परत इति पञ्चाधिकरणः। बुद्धिः क्षणिकेति च कालान्तरावस्थायिनीत्यपरे। एवमनेकनिश्चयेष्वाचार्येषु ये तावत प्रधानमहतोरन्तराले तत्त्वान्तरमिच्छन्ति तत्प्रतिक्षेपायाचार्यः स्वमतमुपन्यस्यति—

[प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोड़शकः।
तस्मादपि षोड़शकात् पञ्चभ्यः पञ्च भूतानि ॥२२॥]

**प्रकृतेर्महान्**—प्रकृतेर्महानुत्पद्यते। महान् बुद्धिर्धृतिर्ब्रह्मा पूर्तिः ख्यातिरीश्वरो विखर इति पर्या [77b]याः। स तु देशमहत्त्वात् कालमहत्त्वाच्च महान्। सर्वोत्पाद्येभ्यो महापरिमाणयुक्तत्वात् महान्। अन्यस्य तु पक्षे नैवाहङ्कारो विद्यत इति ततप्रतिषेध-

1 For Pañcadhikaraṇa, see Introduction



विवक्षयेदमाह—**ततोऽहङ्कारः।** तस्मात महतोऽहङ्कार उत्पद्यते। यः पुनराह महतः षडविशेषाः सृज्यन्ते पञ्च तन्मात्राण्यहङ्कारश्चेति तन्निरासार्थमाह—**तस्माद्—गणश्च षोड़शकः।** तस्मादहङ्कारात षोड़शकोगण उत्पद्यते, पञ्चतन्मात्राण्येका—दशेन्द्रियाणि च। अनेनैव च भौतिकेन्द्रियवादी प्रतिक्षिप्तो बोद्धव्यः।

**तस्मादपि षोड़शकात् पञ्चभ्यः पञ्च भूतानि।** तस्मादपि षोड़शकात्गणात यः पञ्चको गणस्ततः पञ्च महाभूतान्युत्पद्यन्ते। पूर्वपदलोपेनात्र महाभूतानीति वक्तव्ये भूतानीत्युच्यते, भूतसंज्ञा हि तन्मात्राणां न पृथिव्यादीनामत्र तु सांख्यांचार्याणामविप्रतिपत्तिः। भूतकौटस्थ्यवादिनस्तु मीमांसका आर्हताश्च, तत्प्रतिक्षेपेणेदमुच्यत इति।

आह—उक्तं प्रधानाद् बुद्धिरुत्पद्यत इति, तत्र वक्तव्यम् किं लक्षणा पुनर्बुद्धिरित्युच्यते—

[अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद् रूपं तामसमस्माद् विपर्यस्तम् ॥२३॥]

**अध्यवसायो बुद्धिः।** कोऽयमध्यवसायः—गौरेवायं पुरुष एवायमिति यः प्रत्ययो निश्चयोऽर्थग्रहणं सोऽध्यवसायः। अत्र क्षणिकवादी आह—यद्यर्थग्रहणं बुद्धिः अनित्या। कस्मात् ? हेत्वपेक्षणात्। अर्थग्रहणं हि इन्द्रियादिविषयसन्निधान—मावरणाद्यभावं चापेक्षते, न च नित्यस्य कारणापेक्षोपपद्यते ; तस्मादनित्या बुद्धिः। अभिव्यक्तेरदोष इति चेत् स्यात् तत्रेन्द्रियसन्निधानादिभिः अर्थग्रहणं जन्यतेकिं तर्ह्यभिव्यज्यत इति। तच्च नैवं द्विधादोषात। सा ह्यभिव्यक्तिः स्वरूपलाभो वा स्यात् ग्रहणप्रतिबन्धव्युदासो वा। किञ्चातः तद् यदि तावत् स्वरूपलाभः क्रियतेऽर्थग्रहणमिति प्राप्तम्। अर्थग्रहण प्रतिबन्धस्यान्धकारस्य व्युदासस्तदप्ययुक्तं विप्रतिषेधात् [78a] ग्रहणं च स्यात् तत्प्रतिबन्धश्चेति विप्रतिषिद्धम्। किञ्च भेदात् व्यङ्ग्यं हि घटादि चन्द्रार्कौषधिमणिरत्नप्रदीपभेदात् न भिद्यते। अस्ति बुद्धीनामर्थभेदाद्भेदः। वृत्तिभेदाददोषो मृद्वदिति चेत्, स्यान्मतम् यथा मृद्द्रव्यस्य घटादि-संस्थान-वृत्तिभेदेऽप्यभेद एवं बुद्धेरिति। तदप्ययुक्तम्—अनन्यत्वात। यदा बुद्धिरनन्या वृत्तिभ्यः प्राप्तस्तद्भेदे बुद्धिभेदः। किञ्च दृष्टान्तासिद्धेः। साध्यं चैतत किं तदेव मृद्द्रव्यं घटादिवृत्तिभेदमनुभवति, आहोस्वित् प्रत्ययान्तरवशात् अन्यच्चान्यच्चोत्पद्यत इत्यवयव

भेदाच्च । उपेत्य वाऽनुवृत्तिं ब्रूमः, न हि तदेकं मृदूद्रव्यम् ; किं तर्हि बहवो मृत्परमाणवः अनेकदेशावच्छिन्नवृत्तय इति । किञ्चान्यत्—निवृत्तिविभक्तिग्रहणात् । तद्धि मृद्द्रव्यं संस्थानमपेक्ष्यापि गृह्यते । न त्वर्थग्रहणमनपेक्ष्य बुद्धेर्ग्रहणमस्ति ; तस्माद् विषमो दृष्टान्तः । परिणामाददोष इति चेत्, स्यान्मतम्—सत्त्वादीनामङ्गाङ्गिभावनियमात् तेन तेनार्थग्रहणात्मना विपरिणामो वृत्तिरिति । एतच्चायुक्तम् ; उभयकल्पने दोषप्रसङ्गात् । यदि धर्मान्तरोपादानपरित्यागौ व्यक्तव्यक्ती दत्तोत्तर एष पक्षः । अथ नाशोत्पादौ तेन धर्मधर्मिणोरनन्यत्वाद्धर्माणां नाशोत्पादाद् बुद्धेरपि नाशोत्पादप्रसङ्गः, तदनभ्युपगमे वाऽन्यत्वमिति दोषः । आह च—

"नष्टोत्पन्नमनन्यत्वादनित्यं नित्यमेव वा ।
नष्टोत्पन्ना विनष्टानां नित्यं नो नास्ति चैकदा" ॥

यदप्युक्तम्—सत्त्वादीनामङ्गाङ्गिभावनियमादिति, तदयुक्तम् ।

अतएवानित्यत्वसिद्धेः तुल्यानां गुणप्रधानभावानुपपत्तेः । सत्त्वादीनामङ्गाङ्गिभावाभ्युपगमात् बुद्धिक्षयावभ्युपगन्तव्यौ ततश्च बुद्धिरनित्येतिप्राप्तम् , तेभ्योऽनन्यत्वात् । अथ मतं तदवस्थाऽप्यसौ नित्येति, न तर्हि सत्त्वाद्यात्मभूता बुद्धिरिति प्राप्तम् । ततश्च कार्यकारण [78b] योरविवेक इत्यस्य विरोधः । तस्मादनित्या बुद्धिरिति ।

उच्यते—यत् तावदुक्तं हेत्वपेक्षणादनित्या बुद्धिरिति तदयुक्तम् । कस्मात् ! सिद्धसाधनात् । कस्मात्तु विप्रतिपत्तिरनित्या वा बुद्धिः स्यात् नित्या वेति, किंतर्हि हेतुमदनित्यं व्यक्तमिति वचनादनित्यैव । तस्मादिष्टमेवैतत् । संगृहीतधर्म एव क्षणिकत्वमिति चेत् , अथापि स्यात – हेत्वपेक्षा हि संस्कृतत्वम्, संस्कृतं च क्षणिकम् । तद् यथा—प्रदीप इति । तस्मादनित्ये सत्यपि विशेषानभिधाने क्षणिकत्वमेवानेन हेतुना बुद्धेः प्रतिपाद्यत इति । कस्मात् ? उत्तरवचन-विरोधप्रसङ्गात् । एवमपि यदुत्तरक्षणिकत्वप्रसिद्ध्यर्थमुच्यते प्रत्यर्थग्रहणान्यत्वादनित्येत्यादि तस्यानर्थक्यम् । तस्मात् पूर्वोत्तरविरुद्धत्वात् सकलमेवेदं प्रकरणं नाध्ययनं न प्रत्याख्यानमर्हति । परेषां त्वभिनिविष्टा बुद्धिरत्रेत्यसंगतार्थोत्तरापवाददोषमनपेक्ष्यापि प्रत्येकमप्येतदसाधनं वृत्तिविषयत्वात् । स्वकारण-परिनिष्पन्नाया हि बुद्धेः व्यापारोऽर्थग्रहणसंज्ञक इन्द्रियादिसन्निधानापेक्षो न बुद्धिः । तदनन्यत्वात् प्रसङ्गनिवृत्तिः इति चेदथ मतं वृत्तिवृत्तिमतोरनन्यत्वादित्य-मपि कल्पयित्वा अयं प्रसङ्गो न निवर्त्तते । तथाचोक्तम्—'स्वालक्षण्यं वृत्तिस्त्रयस्य,' (का, २९) इति । तदप्यबाधकम् । कस्मात् ? उपचारात् । सत्यमनन्या वृत्तिर्वृत्तिमतो भेदेनाग्रहणात् , तथाऽप्युपरतव्यापारस्यापि परस्यादेर्वृत्तिमतः स्वरूपं नोपरमतीति भेदमुपचर्य व्यवहारो नानाकार्यविषयः प्रवर्तेत



एव । अन्यत्वाप्रसङ्ग इति चेत् , स्यादेतत्-यतो वृत्त्युपरमे वृत्तिमतोऽनुपरमः कार्यनानात्वञ्च, अतएवान्यत्वमपि स्यादिति । तदयुक्तम् एकान्तात । तद् यथा – सेनापंक्ति सेनाकुण्डलाद्युपरमेण तत् सन्निवेशिनामुपरमः कार्यभेदश्च, न चान्यत्वम् ; एवं वृत्तितद्वतोरपि च स्यात । तस्माद् युक्तमेतत् हेत्वपेक्षणस्य वृत्तिविषयत्वात् न बुद्धेरनित्यत्वमिति । [79a] एतेन व्यक्तिविकल्पः प्रत्युक्तः । सोऽपि वृत्तिविषय इति कृत्वा, तदप्युक्तमिन्द्रियादिभेदे भेदादिति । तदप्यनेनैवोक्तम्—वृत्तिभेदोऽत्र न भेद इति । किञ्चानेकान्तात—यथोदकादिभेदात् प्रतिबिम्बभेदो न चाव्यङ्गत्वमेवमन्यत्रापि स्यात् । द्रव्यान्तरोत्पत्तेरदोष इति चेत्, स्यान्मतम्—उदकस्याननसंयोगात् द्रव्यान्तरमेव प्रतिबिम्बलक्षणमुत्पद्यते, न तु मुखंभिद्यत इत्यसदेतत् । कस्मात् ? उभयो कारणत्वेन कल्पनाऽनुपपत्तेः न हि मुखं निमित्तं शक्यं वक्तुम् । विप्रकृष्टत्वात् नादादयो मुखापगमेऽप्युपलब्धिप्रसङ्गात् पाकजवत् । यत पुनरेतदुक्तं वृत्तिभेदाददोषो मृद्वदिति, तथा तदस्तु । यत्तूक्तमनन्यत्वाद् दृष्टान्तासिद्धेश्चेति वृत्त्यनन्यत्वमिदानीमेव प्रत्युक्तम् । क्षणभङ्गप्रतिषेधे चोक्तम्—'न पृथिव्यादीनामन्यथाऽन्यथा चोतपत्तिः' । यत पुनरेतदुक्तं नैकं मृदूद्रव्यमिति तत्र बुद्धिः प्रमाणम् । यदेकबुद्धिनिमित्तं तदेकम् । तत्र यदि, मृदोऽनेकत्वेन प्रयोजनबुद्धिरूपलभ्यते....वयमिति । यत्पुनरेतदुक्तं मृदूद्रव्यस्य संस्थान व्यतिरेकेण स्वभावोऽवधार्यते न तु बुद्धेरर्थग्रहणमन्तरेण स्वरूपग्रहणमिति, तदयुक्तम्—अभावस्यारूपत्वात् । उपेत्य वा—

यथा बाह्याद्यवस्थासु व्याकाराचित्तसन्ततिः ।
विद्यते बीजमात्रा वस्तथा धीरिति गृह्यताम् ॥

यथा बाह्यार्थाकारवच्चित्तसन्ततिरथ च सुप्तमूर्च्छितविरोधसमापन्नानामर्थरूपादृते बीजमात्राऽस्तीत्युपगम्यते सा चिति काऽपि वाऽवस्थेति वचनात् न च गृह्यते तथा बुद्धिरपीति कस्मान्न परिकल्प्यते । यत् पुनरेतदुक्तं यदि धर्म्मान्तरोपादानपरित्यागौ व्यक्तव्यक्ती दत्तोत्तर एष पक्ष इति तदितरत्र तुल्यमस्माभिरपि तर्ह्यसत्कार्यप्रत्याख्याने दत्तोत्तर एष पक्षो व्यक्तिर्न क्रियत इति । नाशोत्पादौ तु अनिष्टावेवेति न परिहा [79b]रं प्रत्यादरः क्रियते । यदप्युक्तं नष्टादुत्पन्नाश्चानष्टमनुत्पन्नं चान्यत्रास्तीति, तदयुक्तम्—अनभ्युपगमात् । नाशोत्पादौ कः प्रतिजानीते यं प्रत्येतदर्थवत् स्यात् । किञ्च, त्वत्पक्षप्राप्तेः । भवत एव नष्टोत्पन्नेभ्यः स्कन्धेभ्यो नान्या सन्ततिरथ च नास्ति दोषः । कयाऽपि युक्त्या स्यादेतनन्यैवासाविति ततश्चैका सन्ततिरिति हीनम् । यदप्युक्तं गुणवृद्धिक्षयेऽनित्यत्वमिति, तदनुपपन्नम् । कस्मात् ? रूपान्तराप्यायनात् । सत्त्वं हि प्रकर्षमनुभवत्

रजस्तमसी च न्यूनतां धर्मादिरूपां बुद्धेराप्याययन्ति, नार्थान्तरं कुर्वन्ति नो खल्वप्य-भावमेवं रजस्तमो वा प्रकर्षमनुभवत् सत्त्वं च न्यूनताधर्मादिरूपं बुद्धेराप्याययन्ति—नार्थान्तरं कुर्वन्तिनाभावम्, एवं गुणवृद्धिक्षयोऽपि रूपान्तराप्यायनात् नास्ति क्षयो बुद्धेः। तत्र यदुक्तं हेत्वपेक्षणादनित्या बुद्धिरिति एतदयुक्तम्। यत् पुनरेतदुक्तं ग्रत्यक्ष-ग्रहणान्यत्वात् प्रतिक्षणं दीपादितैलधारासु शब्दभेदाच्च क्षणिकेति, अत्र ब्रूमः ग्रहणान्यत्वे चोक्तं वृत्तिभेदो न वृत्तिमद्भेदः। किञ्चान्यत्—भिन्नार्थग्रहणैकत्वात्। उपेत्य वा ब्रूमः—यदि प्रत्ययमन्यदन्यद्ग्रहणं कल्प्यते विकल्पबाधसमुच्चय-संशय-द्वित्वातिशय-निवारणेषु तथा कल्माषं शवलं चित्रमित्यनेकार्थरूपमेकं ग्रहणं स्यात्। दृष्टं तत्। तस्मान्नायं क्षणिकत्वे हेतुः। एवमवस्थितमिदम्—अध्यवसायो बुद्धिर्न च क्षणिकेति। बुद्धेस्तु त्रिगुणात्मकत्वात् तस्य तस्य गुणस्य प्रकर्षे तत् तत् रूपान्तरमुत्पद्यत इति।

आह—कस्य गुणस्य प्रकर्षे बुद्धेः किंलक्षणम् रूपान्तरमुपजायत इत्युच्यते—**धर्मो ज्ञानं विराग ऐश्वर्यं सात्त्विकमेतद् रूपम्।** अत्र त्वेतद् रूपमिति सत्यपि धर्मादिभेदे बुद्धिरित्यभेदविवक्षाविषय एकत्ववचननिर्देशः क्रियते। एतदुक्तं भवति यदा रजस्तमसी वशमापाद्य बुद्धिगतं सत्त्वमुत्कृष्टं [80a] भवति, तदाधर्मो ज्ञानं विराग ऐश्वर्यमित्येतद्रूपं भवति। तत्र श्रुतिस्मृतिविहितानां कर्मणामनुष्ठानात् बुद्ध्यवस्थः सत्त्वावयव आशयभूतो धर्म इत्युच्यते। स तु द्विविधः—ब्रह्मादिस्थानेष्वभि प्रेतशरीरेन्द्रियविषयोपभोगनिवर्त्तको ज्ञानाद्यङ्गभूतश्च प्रथमः, अग्निहोत्रहवनादिक्रियाऽनु-ष्ठानसाधनो यमनियमसाधन इतरः। तत्र—अहिंसासत्यमस्तेयमकल्कता ब्रह्मचर्य-मिति पञ्च यमाः। अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवमप्रमाद इति पञ्च नियमाः। एतेषामविलोपेनानुष्ठानात् यतेरेवं विधोत्तरणे सत्त्वधर्म आशयतां प्रतिपद्यते योऽज्ञानादीनां रूपाणामाप्यायनं करोति। एतदभ्युदयनिःश्रेयसयोः सोपानभूतं प्रथमं पर्व, यत्रायमव-स्थितो यतिरितरेषां पर्वणामनुष्ठाने योग्यो भवति। ज्ञानं द्विविधम्, शब्दाद्युपलब्धिलक्षणम् गुणपुरुषान्तरोपलब्धिलक्षणञ्च। तत्र शब्दाद्युपलब्धिलक्षणं प्रत्यक्षानुमानागमरूपम्।

I Cf. *Yama* has five sub-divisions : (1) not to put oneself in anger, (2) to respect one's spiritual masters, (3) to possess internal and external purity, (4) to be moderate in eating and drinking, (5) not to become addicted to license, *Niyama* too is divided into five : (1) Not to kill, (2) not to steal, (3) to speak the truth, (4) to practise continence ( *brahmacarya* ), (5) not to flatter—*Chinese version of Parmārtha* ( Kā, 23 ).

Most probably it was Paramārtha who confused *Yama* and *Niyama*. Our author does not follow *Patañjali*, see, अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः and शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानि नियमा— Yoga-Sūtra, 2, 30 + 32



गुणपुरुषान्तरोपलब्धिलक्षणञ्च द्विविधम्—अपूर्वमभ्यासजञ्च। तयोरपूर्वम्—'ऊहः शब्दो-ऽध्ययनम्' ( का, ५१ ) इति सिद्धिकाण्डानुपतितानि, अभ्यासजं पुनः वैराग्यपर्वविजय-पुष्टलब्धं(?) शान्तममलं ध्रुवं सकलभवाभवप्रतिपक्षभूतम्; यदाचार्यो वक्ष्यति—

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्" ( का, ६४ )॥ इति।

विरागस्तु रागप्रतिपक्षभूतो ज्ञानाभ्यासोपजनितो बुद्धेः प्रसादः। तस्य तु यतमान-व्यतिरेकैकेन्द्रिय-वशीकारलक्षणाश्चतस्रोऽवस्था भवन्ति। तत्रेन्द्रियाणां विषयाभिलाष-लक्षण-कषायपाचनं प्रति यः प्रयत्न उत्साहः सा यतमानसंज्ञा; यतमानको ह्ययमस्मिन् पर्वण्यवस्थितो यतिर्भवति। यदा तु के[80b]षाञ्चिदिन्द्रियाणां परिपकं सा व्यतिरेक-संज्ञा; व्यतिरिच्यन्ते हि तदा यतेरिन्द्रियाणि परिपक्वाण्यपरिपक्वेभ्यो विशिष्टतराणि भवन्तीत्यर्थः। विपरिपक्वसर्वेन्द्रियस्तु संकल्पमात्रावस्थित-कषायो यदा भवति तदैकेन्द्रियसंज्ञा; निवृत्तसर्वेन्द्रियविषयेच्छस्य यतेरेकमेव मनोलक्षणमिन्द्रियं तदा परिपक्वं भवति। संकल्पमात्रावस्थितस्यापि परिपाको वशीकारसंज्ञा; संकल्प-मूलोच्छिन्न-विषयमृगतृष्णो हि अयं यतिरिन्द्रियाणामन्तःकरणस्य च प्रवृत्तिनिवृत्त्योरीष्टे। एकाग्र एकारामोऽविद्यापर्वणोऽतिक्रान्तः परस्य ब्रह्मणः प्रत्यनन्तरो भवति। तदेवं चतुष्टयावस्थं वैराग्यपर्व विज्ञाय तदनुष्ठानाय यतिः प्रयतेत। तस्योपायो दृष्टानुश्रविकविषय-प्रत्याख्याने य उपदिष्टो यश्च तुष्टिषु वक्ष्यमाणस्तमेकीकृत्योत्तरोत्तरां तत्त्वभूमिं विज्ञानस्य विषयीकुर्वन् पूर्वस्यां तत्त्वभूमौ मध्यस्थः स्यात्। ऐश्वर्यमप्रतीघातलक्षणम्—यत् पुनरष्ट-विधमणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्व-मिति।

आह—अथ गुणान्तररूपं किम्? उच्यते—**तामसमस्माद् विपर्यस्तम्।** एतत् अस्माद् धर्मादेः सत्त्वरूपाद् विपर्यस्तं तामसं तमःप्रकर्षोपजनितमित्यर्थः। अत्र शास्त्रचोदितानुष्ठानादाशय-निष्पन्नसत्त्वावयवो धर्म इत्युक्तम्। शास्त्रचोदितस्य नित्यस्य च कर्मणोऽनुष्ठानाद् बुद्ध्यवस्थस्तमोऽवयव आशयतां प्रतिपन्नो धर्मः। स चापि द्विविधः—अनिष्टशरीरेन्द्रियविषयोपभोगनिवर्तकः ख्यातिवारकश्च। यथा च ज्ञानं द्विविधं शब्दाद्युप-लब्धिलक्षणं [ 81a ] गुणपुरुषान्तरोपलब्धिलक्षणञ्चैवमज्ञानमपि विपर्ययेण वाच्यम्। यथा च चतुरवस्थं वैराग्यं तथा यतमानादिकश्चतुरवस्थो रागः। यथा चाष्टगुणमैश्वर्यम् अणिमादि तथाऽष्टगुणमनैश्वर्यमेवमेतत् तामसं महतो रूपम्। यच्चैतदधर्मादिनिमित्त-भूतमुत्कृष्टं तमोरूपं तद् रजसा महाविरोधादेकतामिवापन्नमशुद्धिरित्याचार्यैः पठ्यते।

रजस्तमसी च न्यूनतां धर्मादिरूपां बुद्धेराप्याययन्ति, नार्थान्तरं कुर्वन्ति नो खल्वप्य-भावमेवं रजस्तमो वा प्रकर्षमनुभवत् सत्त्वं च न्यूनताधर्मादिरूपं बुद्धेराप्याययन्ति—नार्थान्तरं कुर्वन्तिनाभावम्, एवं गुणवृद्धिक्षययोऽपि रूपान्तराप्यायनात् नास्ति क्षयो बुद्धेः। तत्र यदुक्तं हेत्वपेक्षणादनित्या बुद्धिरिति एतदयुक्तम्। यत् पुनरेतदुक्तं प्रत्यक्ष-ग्रहणान्यत्वात् प्रतिक्षणं दीपादितैलधारासु शब्दभेदाच्च क्षणिकेति, अत्र ब्रूमः ग्रहणान्यत्वे चोक्तं वृत्तिभेदो न वृत्तिमद्भेदः। किञ्चान्यत्—भिन्नार्थग्रहणैकत्वात्। उपेत्य वा ब्रूमः—यदि प्रत्ययमन्यदन्यद्ग्रहणं कल्प्यते विकल्पबाधसमुच्चय-संशय-द्वित्वातिशय-निवारणेषु तथा कल्माषं शवलं चित्रमित्यनेकार्थरूपमेकं ग्रहणं स्यात्। दृष्टं तत्। तस्मान्नायं क्षणिकत्वे हेतुः। एवमवस्थितमिदम्—अध्यवसायो बुद्धिर्न च क्षणिकेति। बुद्धेस्तु त्रिगुणात्मकत्वात् तस्य तस्य गुणस्य प्रकर्षे तत् तत् रूपान्तरमुत्पद्यत इति।

आह—कस्य गुणस्य प्रकर्षे बुद्धेः किंलक्षणम् रूपान्तरमुपजायत इत्युच्यते—**धर्मो ज्ञानं विराग ऐश्वर्यं सात्त्विकमेतद् रूपम्।** अत्र त्वेतद् रूपमिति सत्यपि धर्मादिभेदे बुद्धिरित्यभेदविवक्षाविषय एकत्ववचननिर्देशः क्रियते। एतदुक्तं भवति यदा रजस्तमसी वशमापाद्य बुद्धिगतं सत्त्वमुत्कृष्टं [80a] भवति, तदाधर्मो ज्ञानं विराग ऐश्वर्यमित्येतद्रूपं भवति। तत्र श्रुतिस्मृतिविहितानां कर्मणामनुष्ठानात् बुद्ध्यवस्थः सत्त्वावयव आशयभूतो धर्म इत्युच्यते। स तु द्विविधः—ब्रह्मादिस्थानेष्वभि प्रेतशरीरेन्द्रियविषयोपभोगनिवर्त्तको ज्ञानाद्यङ्गभूतश्च प्रथमः, अग्निहोत्रहवनादिक्रियाऽनु-ष्ठानसाधनो यमनियमसाधन इतरः। तत्र—अहिंसासत्यमस्तेयमकल्कता ब्रह्मचर्य-मिति पञ्च यमाः। अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवमप्रमाद इति पञ्च नियमाः। एतेषामविलोपेनानुष्ठानात् यतेरेवं विधोत्तरणे सत्त्वधर्म आशयतां प्रतिपद्यते योऽज्ञानादीनां रूपाणामाप्यायनं करोति। एतदभ्युदयनिःश्रेयसयोः सोपानभूतं प्रथमं पर्व, यत्रायमव-स्थितो यतिरितरेषां पर्वणामनुष्ठाने योग्यो भवति। ज्ञानं द्विविधम्, शब्दाद्युपलब्धिलक्षणम् गुणपुरुषान्तरोपलब्धिलक्षणञ्च। तत्र शब्दाद्युपलब्धिलक्षणं प्रत्यक्षानुमानागमरूपम्।

I Cf. *Yama* has five sub-divisions : (1) not to put oneself in anger, (2) to respect one's spiritual masters, (3) to possess internal and external purity, (4) to be moderate in eating and drinking, (5) not to become addicted to license, *Niyama* too is divided into five : (1) Not to kill, (2) not to steal, (3) to speak the truth, (4) to practise continence ( *brahmacarya* ), (5) not to flatter—*Chinese version of Parmārtha* ( Kā, 23 ).

Most probably it was Paramārtha who confused *Yama* and *Niyama*. Our author does not follow *Patañjali*, see, अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः and शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानि नियमाः— Yoga-Sūtra, 2, 30+32



गुणपुरुषान्तरोपलब्धिलक्षणञ्च द्विविधम्—अपूर्वमभ्यासजञ्च। तयोरपूर्वम्—'ऊहः शब्दोऽध्ययनम्' ( का, ५१ ) इति सिद्धिकाण्डानुपतितानि, अभ्यासजं पुनः वैराग्यपर्वाविजय-पुष्टलब्धं(?) शान्तममलं ध्रुवं सकलभवाभवप्रतिपक्षभूतम्; यदाचार्यो वक्ष्यति—

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्" ( का, ६४ )॥ इति।

विरागस्तु रागप्रतिपक्षभूतो ज्ञानाभ्यासोपजनितो बुद्धेः प्रसादः। तस्य तु यतमान-व्यतिरेकैकेन्द्रिय-वशीकारलक्षणाश्चतस्रोऽवस्था भवन्ति। तत्रेन्द्रियाणां विषयाभिलाष-लक्षण-कषायपाचनं प्रति यः प्रयत्न उत्साहः सा यतमानसंज्ञा; यतमानको ह्ययमस्मिन् पर्वण्यवस्थितो यतिर्भवति। यदा तु के[80b]षाञ्चिदिन्द्रियाणां परिपक्वं सा व्यतिरेक-संज्ञा; व्यतिरिच्यन्ते हि तदा यतेरिन्द्रियाणि परिपक्वाण्यपरिपक्वेभ्यो विशिष्टतराणि भवन्तीत्यर्थः। विपरिपक्वसर्वेन्द्रियस्तु संकल्पमात्रावस्थित-कषायो यदा भवति तदैकेन्द्रियसंज्ञा; निवृत्तसर्वेन्द्रियविषयेच्छस्य यतेरेकमेव मनोलक्षणमिन्द्रियं तदा परिपक्वं भवति। संकल्पमात्रावस्थितस्यापि परिपाको वशीकारसंज्ञा; संकल्प-मूलोच्छिन्न-विषयमृगतृष्णो हि अयं यतिरिन्द्रियाणामन्तःकरणस्य च प्रवृत्तिनिवृत्त्योरीष्टे। एकाग्र एकारामोऽविद्यापर्वणोऽतिक्रान्तः परस्य ब्रह्मणः प्रत्यनन्तरो भवति। तदेवं चतुष्ट्यावस्थं वैराग्यपर्व विज्ञाय तदनुष्ठानाय यतिः प्रयतेत। तस्योपायो दृष्टानुश्रविकविषय-प्रत्याख्याने य उपदिष्टो यश्च तुष्टिषु वक्ष्यमाणस्तमेकीकृत्योत्तरोत्तरां तत्त्वभूमिं विज्ञानस्य विषयीकुर्वन् पूर्वस्यां तत्त्वभूमौ मध्यस्थः स्यात्। ऐश्वर्यमप्रतीघातलक्षणम्—यत् पुनरष्ट-विधमणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्व-मिति।

आह—अथ गुणान्तररूपं किम्? उच्यते—**तामसमस्माद् विपर्यस्तम्।** एतत् अस्माद् धर्मादेः सत्त्वरूपाद् विपर्यस्तं तामसं तमःप्रकर्षोपजनितमित्यर्थः। अत्र शास्त्रचोदितानुष्ठानादाशय-निष्पन्नसत्त्वावयवो धर्म इत्युक्तम्। शास्त्रचोदितस्य नित्यस्य च कर्मणोऽनुष्ठानाद् बुद्ध्यवस्थस्तमोऽवयव आशयतां प्रतिपन्नो धर्मः। स चापि द्विविधः—अनिष्टशरीरेन्द्रियविषयोपभोगनिवर्तकः ख्यातिवारकश्च। यथा च ज्ञानं द्विविधं शब्दाद्युप-लब्धिलक्षणं [ 81a ] गुणपुरुषान्तरोपलब्धिलक्षणञ्चैवमज्ञानमपि विपर्ययेण वाच्यम्। यथा च चतुरवस्थं वैराग्यं तथा यतमानादिकश्चतुरवस्थो रागः। यथा चाष्टगुणमैश्वर्यम् अणिमादि तथाऽष्टगुणमनैश्वर्यमेवमेतत् तामसं महतो रूपम्। यच्चैतदधर्मादिनिमित्त-भूतमुत्कृष्टं तमोरूपं तद् रजसा महाविरोधादेकतामिवापन्नमशुद्धिरित्याचार्यैः पठ्यते।

सत्त्वरूपं तु प्रकाश इति। अनयोश्चाभिधानाद् यः प श्चा धि क र ण-पक्षः प्राकृत-वैकृतानां ज्ञानानां प्रधानवत् शुष्कनदीस्थानीयान्तःकरणे बाह्ये च प्रेरकज्ञानांशककृत उपनिपातः, तथा च सात्त्विकस्थित्यात्मककृतमप्रत्ययस्यावस्थानमिति तत् प्रतिक्षिप्तं भवति। किं कारणम् ? यस्मादशुद्धिरेव प्रकाशमलमतिप्रवृत्तं निवर्तयितुं प्रकर्षापन्नाऽन्याभूता(?) च प्रवर्तयितुमेवमष्टरूपा बुद्धिर्व्याख्याता। यस्त्वसावनन्तरमुक्तोऽहंकारस्तं व्याख्यास्यामः।

आह—यद्येवं तस्मादिदमेव तावदुच्यतां किमस्याहंकारस्य लक्षणमिति। उच्यते—

[ अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः।
[1]ऐन्द्रिय एकादशकस्तान्मात्रपञ्चकश्चैव ॥ २४ ॥ ]

**अभिमानोऽहङ्कारः।** कर्तुः स्वात्मप्रत्ययवमर्शात्मको योऽयमहमिति प्रत्यय उत्पद्यते स खल्वहंकारः महतस्तत्त्वान्तरम्। कस्मात् ? तस्य सर्वविषयाध्यवसायरूपत्वात्, अस्य तु स्वात्मप्रत्ययवमर्शात्। न त्वर्थान्तरम्। कस्मात् ? प्रकृतिविकारयोरनन्यत्वाभ्युपगमात्, न हि नः प्रकृतेरर्थान्तरभूतो विकार इति प्राग् विस्तरेण प्रतिपादितम्। स च मूर्तिप्रत्ययाभ्यां महतः स्थूलतरः। कस्मात् ? अविभागात् विभागनिष्पत्तेः कालादिवत्। त्रिगुणस्य च महतो विकारत्वादसावपि त्रिगुणः। कस्मात् ? प्रकृतिरूपस्य विकारे दृष्टत्वात् तन्तुपटवत्। तद्भावसन्निविष्टास्तु ये सत्तादयस्ते आचार्यैः वैकारिकतैजस-भूतादिशब्देनाख्यायन्ते। तथा च शा स्त्र मा[ 81b ]ह—"एतस्माद्धि महत आत्मन इमे त्रय आत्मानः सृज्यन्ते वैकारिक-तैजस-भूतादयोऽहङ्कारलक्षणाः। अहमित्येवैषां सामान्यं लक्षणं भवति, गुणप्रवृत्तौ च पुनर्विशेषलक्षणम्" इति।

आह—का पुनर्गुणप्रवृत्तिर्यस्यामहमस्मि-प्रत्ययैकरूपस्य अहङ्कारस्य विशेषप्रतिपत्तिर्भवतीति। उच्यते—योऽयम् **तस्माद् द्विविधः प्रवर्तते सर्गः।** द्विविध इन्द्रियलक्षणस्तन्मात्रलक्षणश्च, सा गुणप्रवृत्तिरित्युच्यते। कस्मात् ? तत्कार्यत्वात्। गुणप्रवृत्तिकार्यो हि सर्गो दृश्यते, स च खलु लोके कार्यकारणमुपचर्यमाणम्। तद् यथा शालीन् भुंक्त इति।

आह—प्रागुक्तमहङ्कारात् षोड़शको गण उत्पद्यते। इदानीं पुनरुच्यते तस्मात् द्विविधः प्रवर्तते सर्गः। तदिदं पूर्वोत्तरव्याघातादयुक्तमिति। उच्यते—न, सामान्येन

1 Bhaṭṭotpala reads ऐन्द्रियमेकादशकम्—*Bṛhat Saṁhitā*, p. 7.
Also read as एकादशकश्च गणः.



विवक्षितत्वात्। अभेदविवक्षायां हि कृत्वा कार्यकारणलक्षणमेवमस्माभिरुपदिष्टो द्विविधः सर्गः इति। भेदविवक्षायां पुनः—**ऐन्द्रिय एकादशकस्तान्मात्रपञ्चकश्चैव।** इन्द्रियाणामयमैन्द्रियः, एकादश परिमाणमस्य एकादशकः। एवं तन्मात्रेषु वक्तव्यम्। तन्मात्राणां शब्दस्पर्शादीनामयं तान्मात्रः सर्गः, पञ्चकश्च पञ्च परिमाणमस्येति पञ्चकः। अस्य तु षोड़शकस्य विकारस्य संज्ञालक्षणप्रयोजनान्युत्तरत्र वक्ष्यति। एषा गुणप्रवृत्तिर्व्याख्याता—यस्यामस्मिप्रत्ययस्य विशेषग्रहणं भवति—[1]शब्देऽहं स्पर्शेऽहं रूपेऽहं रसेऽहं गन्धेऽहमिति।

आह—अहङ्कारे सत्त्वादीनां संज्ञान्तरावचनमानर्थक्यात्। यदिदमहङ्कारे सत्त्वादीनां संज्ञान्तरमारभ्यते—वैकारिकस्तैजसो भूतादिरिति, तन्न वक्तव्यमानर्थक्यात्। न हि तत्त्वान्तरसन्निवेशिनां सत्त्वादीनां संज्ञाऽन्तराभिधाने किञ्चित् प्रयोजनमस्तीति संज्ञाभूयस्त्वात्। [ 82a ] अथायं निर्बन्धस्तत्त्वान्तरं संज्ञाऽन्तरं वक्तव्यम्, एवं सति तत्त्वभूयस्त्वात् संज्ञाभूयस्त्वं प्राप्नोति। प्रयोजनाभिधानं वा विशिष्टयत्नानामनाकस्मिकत्वात्। अथवा प्रयोजनं वक्तव्यम्—एवमर्थमहङ्कारे संज्ञान्तराभिधानमिति। कस्मात् ? न हि विशिष्टयत्नानामाकस्मिकत्वमुपपद्यत इति। उच्यते—न, कार्यविशेषहेतुत्वात्। महदादिलक्षणानां हि गुणानामनेकरूपस्तत्त्वारम्भ इति हि न संज्ञान्तरमारभ्यते। अहङ्कारस्तु सत्त्वतमोबहुलयोरिन्द्रियतन्मात्रपर्वणोः प्रकृतिः। तदर्थमाचार्याणां यत्नविशेषः। धर्मादिविशेषाभ्युपगमात् महति प्रसङ्ग इति चेत्—न, विशेषितत्वात्। तत्त्वान्तरारम्भ इति विशेषितम्, न तु धर्मादयस्तत्त्वान्तरमतो न महति प्रसङ्गः। विशेषानभिधानादयुक्तमिति चेत्, स्यादेतत्—कः पुनरत्र विशेषो येन धर्मादि न तत्त्वान्तरम्, तत्त्वान्तरं तु श्रोत्रादीति। एतच्च नैवम्। कुतः—वृत्तिमात्रे तदुपचारात्। वृत्तिमात्रे हि महतो धर्माद्युपचारः। तथा च त न्त्रा न्त रेऽप्युक्तम्—'प्र का श वृ त्तिर्ध र्मः' इति। वृत्तिनिष्पादितस्तु संस्थानविशेषो वृत्तिमतस्तत्त्वान्तरमित्यनयोः विशेषः। तस्मात् युक्तमेतत् कार्यविशेषहेतुत्वमिति।

आह—यद्येवमिदं तर्हि वक्तव्यममुष्य कार्यविशेषस्यैवंसंज्ञकादहङ्कारात् प्रवृत्तिरिति। उच्यते—

1 Cf. रूपे अहम् रसे अहम् गन्धे अहम्—*Māṭhara*.
Also, अहं शब्दे अहं स्पर्शे अहं रूपे अहं रसे।
अहं गन्धे अहं स्वामी धनवानहमीश्वरः॥
—*Tattvasamāsa-sūtra-vṛtti*, p. 120.

सत्त्वरूपं तु प्रकाश इति। अनयोश्चाभिधानाद् यः प श्चा धि क र ण-पक्षः प्राकृत-वैकृतानां ज्ञानानां प्रधानवत् शुष्कनदीस्थानीयान्तःकरणे बाह्ये च प्रेरकज्ञानांशककृत उपनिपातः, तथा च सात्त्विकस्थित्यात्मककृतमप्रत्ययस्यावस्थानमिति तत् प्रतिक्षिप्तं भवति। किं कारणम्? यस्मादशुद्धिरेव प्रकाशमलमतिप्रवृत्तं निवर्तयितुं प्रकर्षापन्नाऽन्याभूता(?) च प्रवर्तयितुमेवमष्टरूपा बुद्धिर्व्याख्याता। यस्त्वसावनन्तरमुक्तोऽहंकारस्तं व्याख्यास्यामः।

आह—यद्येवं तस्मादिदमेव तावदुच्यतां किमस्याहंकारस्य लक्षणमिति। उच्यते—

[ अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः।
[1]ऐन्द्रिय एकादशकस्तान्मात्रपञ्चकश्चैव ॥ २४ ॥ ]

**अभिमानोऽहङ्कारः।** कर्तुः स्वात्मप्रत्ययवमर्शात्मको योऽयमहमिति प्रत्यय उत्पद्यते स खल्वहंकारः महतस्तत्त्वान्तरम्। कस्मात्? तस्य सर्वविषयाध्यवसायरूपत्वात्, अस्य तु स्वात्मप्रत्ययवमर्शात्। न त्वर्थान्तरम्। कस्मात्? प्रकृतिविकारयोरनन्यत्वाभ्युपगमात्, न हि नः प्रकृतेरर्थान्तरभूतो विकार इति प्राग् विस्तरेण प्रतिपादितम्। स च मूर्तिप्रत्ययाभ्यां महतः स्थूलतरः। कस्मात्? अविभागात् विभागनिष्पत्तेः कालादिवत्। त्रिगुणस्य च महतो विकारत्वादसावपि त्रिगुणः। कस्मात्? प्रकृतिरूपस्य विकारे दृष्टत्वात् तन्तुपटवत्। तद्भावसन्निविष्टास्तु ये सत्त्वादयस्ते आचार्यैः वैकारिकतैजस-भूतादिशब्देनाख्यायन्ते। तथा च शा स्त्र मा[ 81b ]ह—"एतस्माद्धि महत आत्मन इमे त्रय आत्मानः सृज्यन्ते वैकारिक-तैजस-भूतादयोऽहङ्कारलक्षणाः। अहमित्येवैषां सामान्यं लक्षणं भवति, गुणप्रवृत्तौ च पुनर्विशेषलक्षणम्" इति।

आह—का पुनर्गुणप्रवृत्तिर्यस्यामहमस्मि-प्रत्ययैकरूपस्य अहङ्कारस्य विशेषप्रतिपत्तिर्भवतीति। उच्यते—योऽयम् **तस्माद् द्विविधः प्रवर्तते सर्गः।** द्विविध इन्द्रियलक्षणस्तन्मात्रलक्षणश्च, सा गुणप्रवृत्तिरित्युच्यते। कस्मात्? तत्कार्यत्वात्। गुणप्रवृत्तिकार्यो हि सर्गो दृश्यते, स च खलु लोके कार्यकारणमुपचर्यमाणम्। तद् यथा शालीन् भुंक्त इति।

आह—प्रागुक्तमहङ्कारात् षोडशको गण उत्पद्यते। इदानीं पुनरुच्यते तस्मात् द्विविधः प्रवर्तते सर्गः। तदिदं पूर्वोत्तरव्याघातादयुक्तमिति। उच्यते—न, सामान्येन

1 Bhaṭṭotpala reads ऐन्द्रियमेकादशकम्—*Bṛhat Saṃhitā*, p. 7.
Also read as एकादशकश्च गणः.



विवक्षितत्वात्। अभेदविवक्षायां हि कृत्वा कार्यकारणलक्षणमेवमस्माभिरुपदिष्टो द्विविधः सर्गः इति। भेदविवक्षायां पुनः—**ऐन्द्रिय एकादशकस्तान्मात्रपञ्चकश्चैव।** इन्द्रियाणामयमैन्द्रियः, एकादश परिमाणमस्य एकादशकः। एवं तन्मात्रेषु वक्तव्यम्। तन्मात्राणां शब्दस्पर्शादीनामयं तान्मात्रः सर्गः, पञ्चकश्च पञ्च परिमाणमस्येति पञ्चकः। अस्य तु षोडशकस्य विकारस्य संज्ञालक्षणप्रयोजनान्युत्तरत्र वक्ष्यति। एषा गुणप्रवृत्तिर्व्याख्याता—यस्यामस्मिप्रत्ययस्य विशेषग्रहणं भवति—'शब्देऽहं स्पर्शेऽहं रूपेऽहं रसेऽहं गन्धेऽहमिति।

आह—अहङ्कारे सत्त्वादीनां संज्ञान्तरावचनमानर्थक्यात्। यदिदमहङ्कारे सत्त्वादीनां संज्ञान्तरमारभ्यते—वैकारिकस्तैजसो भूतादिरिति, तन्न वक्तव्यमानर्थक्यात्। न हि तत्त्वान्तरसन्निवेशिनां सत्त्वादीनां संज्ञाऽन्तराभिधाने किञ्चित् प्रयोजनमस्तीति संज्ञाभूयस्त्वात्। [ 82a ] अथायं निर्बन्धस्तत्त्वान्तरं संज्ञाऽन्तरं वक्तव्यम्, एवं सति तत्त्वभूयस्त्वात् संज्ञाभूयस्त्वं प्राप्नोति। प्रयोजनाभिधानं वा विशिष्टयत्नानामनाकस्मिकत्वात्। अथवा प्रयोजनं वक्तव्यम्—एवमर्थमहङ्कारे संज्ञान्तराभिधानमिति। कस्मात्? न हि विशिष्टयत्नानामाकस्मिकत्वमुपपद्यत इति। उच्यते—न, कार्यविशेषहेतुत्वात्। महदादिलक्षणानां हि गुणानामनेकरूपस्तत्त्वारम्भ इति हि न संज्ञान्तरमारभ्यते अहङ्कारस्तु सत्त्वतमोबहुलयोरिन्द्रियतन्मात्रपर्वणोः प्रकृतिः। तदर्थमाचार्याणां यत्नविशेषः। धर्मादिविशेषाभ्युपगमात् महति प्रसङ्ग इति चेत्—न, विशेषितत्वात् तत्त्वान्तरारम्भ इति विशेषितम्, न तु धर्मादयस्तत्त्वान्तरमतो न महति प्रसङ्गः। विशेषानभिधानादयुक्तमिति चेत्, स्यादेतत्—कः पुनरत्र विशेषो येन धर्मादि न तत्त्वान्तरम्, तत्त्वान्तरं तु श्रोत्रादीति। एतच्च नैवम्। कुतः—वृत्तिमात्रे तदुपचारात् वृत्तिमात्रे हि महतो धर्माद्युपचारः। तथा च त न्त्रा न्त रेऽप्युक्तम्—'प्र का श वृ त्ति ध र्मः' इति। वृत्तिनिष्पादितस्तु संस्थानविशेषो वृत्तिमतस्तत्त्वान्तरमित्यनयोः विशेषः तस्मात् युक्तमेतत् कार्यविशेषहेतुत्वमिति।

आह—यद्येवमिदं तर्हि वक्तव्यममुष्य कार्यविशेषस्यैवंसंज्ञकादहङ्कारात् प्रवृत्तिरिति। उच्यते—

1 Cf. रूपे अहम् रसे अहम् गन्धे अहम्—*Māṭhara*.
Also, अहं शब्दे अहं स्पर्शे अहं रूपे अहं रसे।
अहं गन्धे अहं स्वामी धनवानहमीश्वरः॥
—*Tattvasamāsa-sūtra-vṛtti*, p. 1

[ सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
[1]भूतादेस्तान्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥ ]

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।** सर्ग इत्यनुवर्तते । एकादशेन्द्रियाणि सत्त्वबहुलानि वैकृतादहङ्कारात् प्रवर्तन्ते निष्पद्यन्त इत्यर्थः । एकादशाभिधानादेव चेन्द्रियप्रतीतिः पूर्वसूत्रे तत्सामानाधिकरण्यात्, अतो न पुनरिन्द्रियग्रहणम् ।

आह—तन्मात्रसर्गः पुनः किंगुणः कस्माच्चाहङ्कारात् प्रवर्तत इति । उच्यते—**भूतादेस्तान्मात्रः स तामसः ।** भूतादेर्भूतादिसंज्ञकात् तमःप्रधानात् तान्मात्रः सर्गः । तान्मात्र[82b]स्तु तमोबहुलो भूतादिसंज्ञकादहङ्कारात् प्रवर्तते, तत्र पुनस्तन्मात्रग्रहणात् संख्या शस्यत इति नोच्यते ।

आह—प्रकृतिविशेषनिर्देशानर्थक्यम् । प्रागुक्तम्, सत्त्वादीनामहङ्कारावस्थितानां वैकारिकाद्याः संज्ञाः । उच्यते, तद् यदि सत्त्वं वैकारिकशब्देनोच्यते वैकारिकाणि चेन्द्रियः एकादशकः सर्गः प्रवर्तत इत्युक्ते गम्यते एतत्—सात्त्विकोऽसौ, भूतादेस्तान्मात्र इत्युक्ते गम्यते एतत्—तामस इति । कस्मात् ? न ह्यस्ति सम्भवो यत् सत्त्वात् तमोबहुलः सर्गः स्यात् तमसश्च सत्त्वबहुल इति । उच्यते—न, अप्रसिद्धत्वज्ञापनात् । यस्यैवार्थस्य ज्ञापनार्थमेवमिह क्रियते, कथं गम्यते सत्त्वं वैकारिकशब्देनोच्यते, तमो भूतादिशब्देन, रजस्तैजसशब्देन ; अप्रसिद्धार्था हि ता न्त्रि की परिभाषेयमनिर्णीता न गम्यत इति ।

आह—तैजससंज्ञाऽनर्थक्यमिति । उच्यते—न, **तैजसादुभयम् ।** उभयत्र तत्सामर्थ्यात् । स्यादेतदेवं यद्यस्य कार्यसामर्थ्यमेव न स्यात् । अस्मात्तु तैजसादुभयमप्येतत् तन्मात्रेन्द्रियसंज्ञकं प्रवर्तत इत्यनुवर्तते । कथम् ? यदा हि वैकारिकोऽहङ्कार इन्द्रियभावेन प्रवर्तते तदा निष्क्रियत्वात् तैजसं प्रवर्तकत्वेनाकाङ्क्षति, भूतादि भेदकत्वेन । कस्मात् ? तेनैव तदभेदात् । तद् यथाऽग्निरग्नौ प्रक्षिप्तोऽग्निरेव भवति, आपो वा अप्सु प्रक्षिप्ता आप एव भवन्ति ; एवं सत्त्वमेव सत्त्वेन भेदं जनयति गुणान्तरसंसर्गमपेक्षते । भूतादिलक्षणस्य तु तमसः संसर्गात् भिद्यमानं तैजसेन च रजसा क्रियाऽऽत्मकेनानुगृहीतमेकादशेन्द्रियभावमपेक्षते । तथा भूतादिलक्षणं तमोऽहङ्कारात् तन्मात्रभावेन प्रवर्तमानं प्रवृत्त्यर्थं तैजसमाकाङ्क्षति, वैकारिकं भेदत्वेन । कस्मात् ? तेनैव तस्य भेदादिति योज्यम् ।

1 Also read as भूतादेस्तन्मात्रः.



शा स्त्र ञ्चै व मा ह—"तदेतस्मिन् वैकारिके स्रक्ष्यमाण एष भूतादिस्तैजसेनोपष्टब्ध एतं वैकारिकमभिधावति । तथैव तस्मिन् भूतादौ स्रक्ष्यमाण एष भूतादिस्तैजसेनोपष्टब्ध एतं भूतादिम[83a]भिभवति"—इत्यनेन न्यायेन तैजसादुभयनिष्पत्तिरिति व्याख्यातोऽहङ्कारः ।

आह—प्रागपदिष्ट ऐन्द्रिय एकादशकः प्रवर्तते वैकृतादहङ्कारादिति । तत् सामान्याभिधानं न प्रतिपद्यामहे । तस्माद् वक्तव्यं कानीन्द्रियाणि भवतोऽभिप्रेतानि । उच्यते, द्विविधानीन्द्रियाणि—बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च । तत्र—

[ बुद्धीन्द्रियाणि [1]कर्णत्वक्चक्षूरसननासिकाऽऽख्यानि ।
वाक्पाणिपादपायूपस्थाः[2] कर्मेन्द्रियाण्याहुः ॥ २६ ॥ ]

**बुद्धीन्द्रियाणि कर्ण-त्वक्-चक्षूरसन-नासिकाऽऽख्यानि ।** कर्णौ त्वक् चक्षुषी च रसनं च नासिका च—कर्णत्वक्चक्षूरसननासिकाः । आख्यानमाख्या प्रत्यायनमित्यर्थः । एतैः शब्दैराख्या येषां तानीमानि कर्णत्वकचक्षूरसन-नासिकाऽऽख्यानि । अधिष्ठानभेदात् द्विवचनेन विग्रहः क्रियते एतानि बुद्धीन्द्रियाणि प्रत्यवगन्तव्यानि । बुद्धेरिन्द्रियाणि बुद्धीन्द्रियाणि, किं पुनरेतानि बुद्धेरिति । उच्यते—शब्दादिविषयप्रतिपत्तौ द्वारम् । कस्मात् ? अबहिर्वृत्तित्वादन्तःकरणस्य नास्ति बहिर्वृत्तिरित्यतो नालमेतत् साक्षात् शब्दादीनर्थान् प्रतिपत्तुम् । तस्मात् श्रोत्रादिलक्षणं साक्षात् बाह्यविषयप्रकाशनसमर्थं कारणान्तरमपेक्षते, तत्प्रणालिकया तस्य विषयग्रहणम् । तस्माद् युक्तमुक्तं बुद्धेर्बाह्यविषयद्वारभूतत्वात् बुद्धीन्द्रियाणीति ।

आह—कर्मेन्द्रियाणि पुनः कानीति—**वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः ।** वाक् च पाणी च पादौ च पायुश्चोपस्थश्च—वाक्पाणिपादपायूपस्थाः । एतानि कर्मेन्द्रियाण्याहुराचक्षते ।

आह—कथमेतदुपलभ्यते अधिष्ठानादर्थान्तरभूतानीन्द्रियाणि न पुनरधिष्ठानमात्रमिति । उच्यते—अधिष्ठानादिन्द्रियपृथक्त्वं शक्तिविशेषोपलम्भात् । यथा शरीरासम्भविनो विषयव्य[83b]वसायलक्षणस्य शक्तिविशेषस्योपलम्भादर्थान्तरबुद्धिरनुमीयते, एवमधिष्ठानासम्भविनो विषयग्रहणलक्षणस्य शक्तिविशेषस्योपलम्भादर्थान्तरमिन्द्रियमिति ।

1 Bhaṭṭotpala also reads कर्णत्वक्, but others read श्रोत्रत्वक्.

1 Māṭhara reads पायूपस्थान्.

आह—न, असम्भवासिद्धेः। अधिष्ठानमात्रस्य विषयग्रहणं न सम्भवति, अर्थान्तरस्य च सम्भवति इत्येतदुभयमपि चाप्रसिद्धमिति। उच्यते—नैतदप्रसिद्धम्, तुल्यजातीयेषु तदनुपपत्तेः। यस्माद् भौतिकेषु अन्येषु घटादिषु विषयग्रहणसामर्थ्या-सम्भवः अहङ्कारविकारवत् तत्सामर्थ्याप्रतिषेधात् नेन्द्रियाणां नस्तत्प्रतिषेधोऽनुमातव्यः इति। एतच्चायुक्तम्। कस्मात्? शक्तिभेदापत्तेः। वैकारिकं सत्त्वमाहङ्कारिकं प्रकाशरूपं तच्छक्तिविशेषात् इन्द्रियाणि न उत्पद्यन्ते, भूतादिलक्षणस्य तमसः सामर्थ्यात्। तन्मात्राणि परस्परपृथिव्यादीनामेकरूपत्वात्, तस्मादयमसमः समाधिरिति। एतेन भौतिकत्वं प्रत्युक्तम्।

आह—कथमवगम्यते बहूनीन्द्रियाणि न पुनरेकमेवेन्द्रियं मनोवत् सर्वार्थम् अनेकाधिष्ठानं स्यादिति। उच्यते—न, युगपत् प्रवृत्त्यप्रवृत्तिप्रसङ्गात्। यद्येकमेव इन्द्रियं मनोवत् सर्वार्थमनेकाधिष्ठानं स्यादेकविषयप्रतिपत्तौ वा सर्वविषयप्रतिपत्तिः। दृष्टस्तु ग्रहणभेदस्तस्मान्नैकमिन्द्रियमिति। भौतिकैरनुग्रहोपघातदर्शनादिन्द्रियाणां भौतिकत्व-मिति चेत्, स्यान्मतम्—इह भौतिकानां घटादीनां भौतिकैर्मृद्दण्डचक्रसूत्रोदकमुद्गरादिभि-रनुग्रहोपघातो दृष्टः। यदि भौतिकानीन्द्रियाणि स्युः, नैषां भौतिकैरञ्जनादिभिरनुग्रहः क्रियते उपघातश्च रजःप्रभृतिभिरिति। एतच्चायुक्तम्। कस्मात्? अनेकान्तात्। तद् यथा भौतिकैर्वेदनादिभिरन्तःकरणस्य ग्रहणधारणस्मृतिलक्षणोऽनुग्रहः क्रियते [84a] उपघातश्चोपलादिभिः, न चास्य भौतिकत्वमेवमिन्द्रियस्यापि स्यात्। वैशेषिकगुण-व्यञ्जकत्वात् विकारप्रतीतिरिति चेत्—अथ मतं पृथिव्यादि-वैशेषिको गन्धः घ्राणेनाभि-व्यज्यते, औदको रसो रसनेन च, आग्नेयं रूपं वीक्षणेन, वायवीयस्पर्शः त्वचा, आकाशीयः शब्दः श्रोत्रेण। येन च यस्य वैशेषिकगुणाभिव्यक्ति स्तस्य तद्विकारत्वं दृष्टम्। तद् यथा—प्रदीपस्य रूपाभिव्यञ्जकत्वे सति तैजसत्वमिति। एतच्चानुपपन्नम्। कस्मात्? अनिष्टप्रसङ्गात्। वैशेषिकगुणव्यञ्जकानां तद्विकारित्वमिच्छतः प्राप्तमपां गन्धाभिव्यक्तिहेतुत्वात् पार्थिवत्वम्—अथैतदनिष्टम्, न तर्ह्यैकान्तिको हेतुरिति। तत्र यदुक्तं वैशेषिकगुणाभिव्यञ्जकत्वात् भौतिकानीन्द्रियाणीति, एतदयुक्तम्।

आह—एकादशेन्द्रियाणि अहङ्कारात् उत्पद्यन्त इति प्रागपदिष्टम्। इदानीं बुद्धीन्द्रियकर्मेन्द्रियाणि दशापदिश्यन्ते, तदिदं पदार्थन्यूनमिति। उच्यते—स्यादेतदेवं यद्येतावदिन्द्रियपर्व स्यात्। किं तर्हीति—

[ [1]सङ्कल्पकमत्र मनस्तच्चेन्द्रियमुभयथा समाख्यातम्।
अन्तस्त्रिकालविषयं तस्मादुभयप्रचारं तत्॥ २७॥ ]

1 Bhaṭṭotpala also adopts this reading, but he wrongly attributes



**संकल्पकमत्र मनः**—अत्रेन्द्रियपर्वणि मनो भवद्भिः प्रत्यवगन्तव्यम्। तत्र संकल्पकमिति लक्षणमाचक्ष्महे। संकल्पोऽभिलाष इच्छा........इत्याद्यनर्थान्तरम्। सङ्कल्पयतीति संकल्पकम्, एतत् मनसो लक्षणम्। तस्मादस्य प्रत्यक्षतोऽनुपलभ्यमानस्य अस्तित्वमवसीयते। कस्मात्? व्यस्तसमस्तानामिन्द्रियान्तराणां तदसम्भवात्। अपोह्य हि मनः सङ्कल्पं व्यस्तानामिन्द्रियान्तराणां भवान् परिकल्पयेत्, समस्तानां वा। किञ्चातः तत्र तावद् व्यस्तानामिन्द्रियाणां सङ्कल्पो भवति। किं कारणम्? अनियतविषयत्वात्। नियतो हि श्रोत्रादीनां शब्दादिर्विषयः, अनियतविषयश्च सङ्कल्पः। किञ्च—त्रिकाल-विषयत्वा[84b]त्। वर्तमानविषया श्रोत्रादिवृत्तिः त्रिकालविषयश्च सङ्कल्पः। तस्मान्न व्यस्तानां नापि समस्तानां। वधिरादिषु तदभावप्रसङ्गात्। यदि समस्तेन्द्रियवृत्तिः सङ्कल्पः स्यात् प्राणादिवदिति चेत्, स्यान्मतम्—यथा समस्तेन्द्रियवृत्तिः प्राणादयो न चान्यतरवैकल्ये तदभाव, एवं समस्तेन्द्रियवृत्तिः सङ्कल्पः स्यात् चान्यतरवैकल्ये तदभावः स्यादिति। एतच्चानुपपन्नम्, विशेषितत्वात्। निर्विषया प्राणादिवृत्तिः, शब्दादिविषयस्तु संकल्प इति विशेषितम्। तस्माद् व्यस्तसमस्तानामिन्द्रियाणां सङ्कल्पानुपपत्तेर्मनसो लिङ्गमेतदस्तित्वे इति सिद्धम्।

आह—तदवधारणीयम्, इन्द्रियद्वैविध्यात्। द्विप्रकारकाणि हीन्द्रियाणि पुरस्तादुप-दिष्टानि। तत्र मनोऽप्यवधारणीयं किं बुद्धीन्द्रियम् अथ कर्मेन्द्रियमिति। उच्यते—**तच्चेन्द्रियमुभयथा समाख्यातम्।** ह्यर्थे चः पठितः। तद्धीन्द्रियमुभयथेत्यर्थः। मनो न केवलं बुद्धीन्द्रियमपितु कर्मेन्द्रियमपि।

the Kārikās as quoted by him to Kapilācāryya—Commentary on the *Bṛhat Saṁhitā*, p. 7.

Paramārtha's reading tallis with the first hemistich, but in the second hemistich he adopts the reading of Gauḍapāda and Vācaspati. See, 'Manas is that which discerns. One says that, that organ is of two sorts: it is modified according to the variations of the three guṇas (on the one hand) and according to external differences (on the other hand)'—*Chinese version of Paramārtha*, Kā. 27.

Vācaspati reads—

उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्च साधर्म्यात्।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च॥

Māṭhara reads ग्राह्यभेदाच्च in place of बाह्यभेदाश्च.

नियमहेत्वभावादयुक्तमिति चेत्, स्यात्पुनरेतत्—कोऽत्र नियमहेतुः यत् इन्द्रियत्वाविशेषे मनस एवोभयप्रचारत्वमभ्युपगम्यते नान्येषामिति। उच्यते—**अन्तस्त्रिकालविषयं तस्मादुभयप्रचारं तत्।** त्रिकालविषयत्वात्। इह यस्यान्तस्त्रिषु कालेषु करणस्य वृत्तिस्तदुभयप्रचारम्। तद् यथा—बुद्धिः साक्षात् विषयानभिसन्धानादतीतानागतवर्तमानविषयत्वाच्च मनोऽन्तस्त्रिकालविषयम्। तस्मादुभयप्रचारं तदिति सिद्धम्।

युक्तिदीपिकायां सांख्यसप्ततिपद्धतौ षष्ठमाह्निकम्।

समधिगतं करणपर्व, तस्येदानीं व्यस्तसमस्तवृत्तयो वक्तव्याः। सति चोभयाभिधाने व्यस्तवृत्तिरेवतावदुच्यते, न समस्तवृत्तिः। किं कारणम्? प्रकरणशेषभूतत्वात्। श्रोत्रादीनां हि सद्भावप्रकरणमिदमनुक्रान्तम्। [85a] स चैषां सद्भावः शक्तिविशेषोपालम्भादित्युक्तम्। इदानीमेष शक्तिविशेषोऽस्माकं व्यस्तवृत्तिरित्युच्यते। तस्मात् तदनुक्रमणं करिष्यामः।

आह—यद्येवं तस्मादुच्यतां तस्य करणस्य कस्मिन्नार्थे वृत्तिः किंलक्षणा वेति। उच्यते—यदुक्तं तस्य कस्मिन्नार्थे वृत्तिरित्यत्र ब्रूमः—

[ [1]रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्॥ २८॥ ]

**रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।** रूपादिषु शब्दस्पर्शरूपरसगन्धेषु स्वभेदभिन्नेषु पञ्चानां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां श्रवणस्पर्शनदर्शनरसनघ्राणलक्षणो व्यापारो वृत्तिरित्युच्यते। तत्र करणनिर्देशे श्रोत्रेन्द्रियस्य प्राक् पाठात् तद्विषयनिर्देशातिलङ्घने प्रयोजनं नास्तीति कृत्वा शब्दादिषु पञ्चानामित्येव पठितव्यम्। प्राक्तनस्तु प्रमादपाठः। यत् पुनरेतदुक्तं किंलक्षणेति, अत्र ब्रूमः—आलोचनमात्रमिष्यते। आलोचनं ग्रहणमित्यनर्थान्तरम्, मात्रशब्दो विशेषनिवृत्त्यर्थः। तद् यथा—भैक्षमात्रमस्मिन् ग्रामे लभ्यत इत्युक्ते नान्यो विशेष इति ज्ञायते, छन्दोमात्रमधीते माणवक इत्युक्ते नान्यदधीत इति; एवमालोचनमात्रमिन्द्रियाणामिष्यते वृत्तिरित्युक्ते नान्यो विशेष इति गम्यते। तेन किं सिद्धं भवति, यदुक्तम न्यै रा चा र्यैः 'सामान्यज्ञानमिन्द्रियाणां विशेषज्ञानं बुद्धेः' इति तत् प्रतिषिद्धं भवति।

आह—कः पुनरस्मिन् दर्शने दोषो यत एतत् प्रतिषिध्यत इति। उच्यते—सामान्यविशेषयोरितरेतरापेक्षत्वे सत्येकस्मिन् अविरोधात् अन्यतरपरिकल्पनाऽऽनर्थक्यम्। यदि खल्विन्द्रियस्य सामान्यज्ञानं न स्यात् तेन विशेषापेक्षं सामान्यं सामान्यापेक्षश्च

[1] Māṭhara and Bhaṭṭotpala read रूपादिषु, but Vācaspati reads शब्दादिषु. Our author also criticises the reading and later on prefers शब्दादिषु.

विशेष इति यत्र सामान्यज्ञानं तत्र विशेषज्ञानमपि न प्रतिषिध्यत इत्युभयमपीन्द्रियस्य स्यात्। ततश्चान्तःकरण-परिकल्पनाऽनर्थकम्। विशेषवतो वाऽन्तःकरणस्य कः सामान्येन विरोध इत्युभयस्यापि तत्र सम्भवादिन्द्रियानर्थक्यम्; [85b] तस्मादप्रत्ययमिन्द्रियमिति। इन्द्रियस्य चेत् प्रत्ययः स्यात्, यथा प्रत्ययवतोऽन्तःकरणस्यानियतविषयत्वमेवमस्यापि स्यात्। न तु तदस्ति; तस्मादप्रत्ययमिन्द्रियमिति। किञ्च, कालातिवृत्तिप्रसङ्गात्। इन्द्रियस्य चेत् प्रत्ययः स्यात्, यथा प्रत्ययवतोऽन्तःकरणस्य त्रिकालविषयत्वमेवमस्यापि स्यात्; न तु तदस्ति। तस्मादप्रत्ययमिन्द्रियमिति। किञ्चान्यत्, स्मृत्यदर्शनात्। इन्द्रियस्य चेत् प्रत्ययः स्यात्, यथा प्रत्ययवतोऽन्तःकरणस्यादिरूपोपपत्तिरेवमत्रापि स्यात्। न तु तदस्ति; तस्मादप्रत्ययमिन्द्रियं सिद्धमिति।

आह—भवतु तावदप्रत्ययमिन्द्रियम्, तत्तु ग्रहणरूपं न तु प्रकाशकं प्रदीपवदित्यत्र को हेतुरिति। उच्यते—न, कारणान्तरप्रसङ्गात्। यदि प्रदीपवदिन्द्रियं प्रकाशकं स्यात्, तेन यथा तत्प्रकाशितेषु घटादिष्वर्थेषु करणान्तरमार्गणमेवमत्रापि स्यात्। न चैतदिष्टम्, अतो न प्रदीपवदिन्द्रियं प्रकाशकमिति। अन्तःकरणसद्भावादयुक्तमिति चेत्, स्यान्मतम्—अस्ति करणान्तरं बुद्धिलक्षणं यदिन्द्रियेण प्रदीपवत् प्रकाशितमर्थं गृह्णाति; तस्मात् परवादानुवादोऽयं क्रियते न प्रतिषेध इति। तच्च नैवम्। कस्मात्? प्रदीपेन्द्रिययोरन्यतरानुपादान प्रसङ्गात्। इन्द्रियमपि प्रकाशकं प्रदीपोऽपि तत्रान्यतरस्यानुपादानं प्रसक्तम्। कस्मात्? न ह्येकार्थकारिणो युगपत् करणे सामर्थ्यमस्तीति। किञ्चान्यत्—अन्तःकरणहानेः। इन्द्रियेन प्रदीपवत् प्रकाशितान् बाह्यानर्थान् साक्षादन्तःकरणं गृह्णातीति वदतोऽन्तःकरणमेव हीयते। तस्मादयुक्तमन्तःकरणस्य ग्रहणसामर्थ्यम्। पुरुषस्येति चेन्न, करणानर्थक्यप्रसङ्गात्। साक्षात् विषयग्रहणसमर्थं पुरुषमिच्छतः करणानर्थक्यं प्रसज्यते। तस्माद् युक्तमेतत् ग्राहकमिन्द्रियं [86a] न तु प्रदीपवत् प्रकाशकमिति।

आह—भवतु तावत् ग्रहणमात्रमिन्द्रियवृत्तिरप्रत्यया। ग्रहणप्रत्यय-प्रकाशानामिदानीं को भेदः। उच्यते—विषयसम्पर्कात् ताद्रूप्यापत्तिरिन्द्रियवृत्तिग्रहणम्, तथा विषयेन्द्रियवृत्त्यनुकारेण निश्चयो गौरयं शुक्लो धावतीत्येवमादिः प्रत्ययः। तथा विषयसम्पर्कापगमे श्रोत्रादिवृत्तेः ताद्रूप्यापगमो वर्तमानकालता ग्रहणस्यानुभवात्तु संस्काराधानं तत्पूर्विका च स्मृतिरिति त्रिकालविषया प्रत्ययस्येत्ययमनयोर्विशेषः। बाह्यस्तु प्रकाशो न विषयरूपापन्नः, संस्कारात्तु घटादीनां व्यवधानरूपं पार्थिवं छायालक्षणं धर्ममपहृत्य व्यञ्जकत्वाय कल्पते चक्षुषोऽनुग्रहाय। उभयोर्वा चक्षुर्विषययो रि त्य प रे। तस्मादुपपन्नमेतत्—प्रकाशकं प्रदीपादि, ग्राहकं श्रोत्रादि, व्यवसायकमन्तःकरणमिति। अथ



कर्मेन्द्रियाणां का वृत्तिरित्युच्यते। नै या यि का स्त्वेवमाहुः—'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः' (न्या० सू० १।१।१२)। भूतेभ्य इत्यनेन स्वविषयोपलब्धिलक्षणत्वं हीन्द्रियाणां भूतप्रकृतित्वे सति नि....हति नान्यथा। तानि पुनरिन्द्रियकारणानि पृथिव्यप्तेजोवायुराकाशमिति भूतानि एभ्यः पञ्चभ्यो यथासंख्यं घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्चेन्द्रियाणि भवन्ति। भूतप्रकृतित्वमिति भूतस्वभावं व्याख्यायमानं पञ्चस्वपि सम्भवति। भूतकारणत्वं त्वन्येषु चतुर्षु तथैव। श्रोत्रे तु कथञ्चित् कर्णशष्कुल्यावच्छिन्न-नभोभागाभिप्रायेण व्यवहारतः समर्थनीयम्। एवं भौतिकानीन्द्रियाणि स्वस्व-विषयमधिगन्तुमुत्सहन्त इति तल्लक्षणत्वमेषां सिध्यतीति। अतो भूतेभ्य इत्युक्तम्। एतत्तु सांख्याचार्याणां नेष्टम्। एवं हि सां ख्य वृ द्धा आहुः—आहङ्कारिकानीन्द्रियानि अर्थं साधयितुमर्हन्ति ना[86b]न्यथा। तथा हि कारकं कारकत्वादेव प्राप्यकारि भवति। भौतिकानि चेन्द्रियाणि कथं प्राप्यकारीणि दूरवर्त्तिनि विषये भवेयुः, आहङ्कारिकाणां तु तेषां व्यापकत्वात्। विषयाकारपरिणामात्मिका वृत्तिर्वृत्तिमतोऽनन्या सती सम्भवत्येवेति सुवचं प्राप्यकारित्वम्। अपि च महदणुग्रहणमाहङ्कारिकत्वे तेषां कल्पते, न भौतिकत्वे; भौतिकत्वे हि यत्परिमाणं करणं तत्परिमाणं ग्राह्यं गृह्णीयात्।

आह, अथ कर्मेन्द्रियाणां का वृत्तिरिति उच्यते—**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्।** वाक्पाणि-पादपायूपस्थानां तु वचनादानविहरणोत्सर्गानन्दलक्षणा यथाक्रमं वृत्तयः प्रत्यवगन्तव्याः। तत्रोच्यते अनेनेति वचनम्। तस्माद् य एवार्थप्रत्यायनसमर्थो वर्णसमुदायः पदवाक्यश्लोकग्रन्थलक्षणः स वागिन्द्रियस्यार्थो नान्यः। आदीयते अनेन इत्यादानम्, आङभिविध्यर्थे प्रयुज्यते; ततश्च यदेव प्रक्षालन-परिमार्जनोपस्पर्शनाध्ययन-प्रहरणशिल्पव्यायामादि कृत्स्नं ग्रहणमिन्द्रियार्थो नान्यः। एवमुत्कृष्टः सर्ग उत्सर्गः, विशिष्टं हरणं विहरणम्, अतश्च यदेव समविषम-निम्नोन्नत-चङ्क्रमण-परिवर्तन-नाट्यव्यायामादिः स इन्द्रियार्थो नान्यः—एवमुत्कृष्टः सर्ग उत्सर्गः। अतश्च यत्र वा शितपीत-विपरिणामस्य सम्यक्स्रोतोमार्गानुसारिणो विसर्गः स इन्द्रियार्थो नान्यः। एवमभिव्याप्यानन्दनमानन्दः। ततश्च य एवासाधारणप्रीतिनिर्णयनाभिनिष्पत्ति-लक्षणः स इन्द्रियार्थो नान्यः।

आह—प्रागन्तःकरणवृत्तिनिर्देशः सर्गक्रमानुगमात् पूर्वं बुद्ध्यहङ्कारमनसां वृत्तिनिर्देशः कर्तव्यः। किं कारणम्? एवं हि सर्गक्रमोऽनुगतो भवति। क्रमभेदे वा प्रयोजनं वक्तव्यमिति, उच्यते—नेन्द्रियवृत्तिपूर्वकत्वात्। [87b] अन्तःकरणस्य हि इन्द्रियवृत्तिपूर्वकः प्रत्ययः। तथाच वक्ष्यति—'दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका

वृत्तिः' (का, ३०) इति। तस्मात् सर्गक्रमेण विना तन्निर्देशः प्रागाचार्येण क्रियत इति।

आह—तदसम्भवः, शास्त्रे प्रागभिमानाभिधानात्। शा स्त्रं ह्येवमाह—का नु भोः संज्ञा मातुरुदरेऽवस्थितं कुमारं प्रत्यभिनिर्विशत इति, अस्मीत्येषा माहात्मीसंविदिति। तथा कार्यकारणव्यूह-समकालं माहात्म्यशरीरोऽस्मीति प्रतिबुध्यते। प्रवृत्ताश्चैव ह्यव्यक्ता भवन्त्यस्मीत्यस्मितामात्राः। प्रमाणं च शास्त्रम्। तस्मात् प्रागन्तः-करणनिर्देशः कर्तव्यः। उच्यते—तन्निमित्तार्थेन विवक्षितत्वात्। सत्यमेतत् कार्यकारण-व्यूहनिष्पत्तिसमकालमस्मीत्येषा माहात्मोसंवित् प्रत्युपधीयते। शब्दादिविषयस्त्वन्तः-करणप्रत्ययः श्रोत्रादिनिमित्त इति। एतत् पूर्वशब्देन विवक्षितम्। न च निमित्तमतिक्रम्य नैमित्तिकाभिधानं न्याय्यम्। अथवा नैव वयमिदं प्रष्टव्या यथा प्रागन्तःकरणवृत्तिनिर्देशः कर्तव्य इति। किं कारणम्? यस्मात्—

[स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च॥ २९॥].

**स्वालक्षण्यं वृत्तिस्त्रयस्य।** स्वलक्षणमेव स्वालक्षण्यम्, स्वार्थे तद्धितवृत्तिः अन्यभावस्तु कालशब्द-व्यवायादिति (?)। श्रोत्रादीनामपि च सौक्ष्म्याल्लक्षणमपदेष्टुमशक्य-मिति वृत्तिरेवोच्यते न लक्षणम्। तदेव चैषां लक्षणं भवति। यच्छब्दालोचनसमर्थं तत् श्रोत्रम्। एवमितरेष्वपि वक्तव्यम्। बुद्ध्यहङ्कारमनसाञ्च लक्षणमध्यवसायाद्युक्तम्। तदेव वृत्तित्वेनाचक्षाणः श्रोत्रादीनामेव चाभिदधानं लक्षणं चाप्याचक्षाणो वृत्तिवृत्तिमतोः अनन्यत्वं ज्ञापयति। अन्यथा तु यथा व्यवसायादि लक्षणमे[87b]वं रूपादिषु पञ्चानामालोचनमात्रं लक्षणमित्युच्यते न तु वृत्तिरिति। श्रोत्रादिवत् बुद्ध्यादीनामपि व्यवसायादयो वृत्तिरित्युच्यते, न तु लक्षणम्। तस्मादन्यथानिर्देशो ज्ञापकं वृत्तिवृत्तिमत्योः अन्यत्वस्येति व्याख्याता करणवृत्तिः।

**सैषा भवत्यसामान्या।** सेति पूर्वकृतां वृत्तिमभिसम्बध्नाति। एषेति सर्वनाम्ना प्रत्याकृष्टां तामेव प्रत्यक्षं प्रतिनिर्दिशति, भवतीति वक्ष्यमाणेन धर्मान्तरेण अस्यास्तद्वत्ताऽनुभावित्वं ख्यापयति, असामान्येति धर्ममाचष्टे; सामान्या साधारणेत्यर्थः, न सामान्या असामान्या, प्रतिकरणं नियतेत्युक्तं भवति। या हीयमनुक्रान्ता करणपर्वणे अध्यवसायादिका वृत्तिरियं व्यस्तानां करणानां प्रतिस्वं नियता। ततश्चैषां बुद्ध्यादीनां कार्यविशेष-निमित्तभावसंसूचितस्य स्वरूपस्यासङ्करः सिद्धः।



आह—सामान्यविशेषयोरितरेतरापेक्षत्वात् असामान्याभिधानेन सामान्यस्यापि अभिधानादध्यवसायादि करणानामसामान्या वृत्तिरित्युक्ते अर्थादापन्नमेषां सामान्याऽपि वृत्तिरस्तीति।- तस्मादसावपि वक्तव्येति। उच्यते—**सामान्यकरणवृत्तिः प्राणाद्या वायव पञ्च।** सामान्या चासौ करणवृत्तिः—सामान्यकरणवृत्तिः, प्राणः आद्यो येषां ते प्राणाद्याः—प्राणापानसमानोदानव्यानाः पञ्च समस्तकरणवृत्तिः प्रत्यवगन्तव्येति। तैः सर्वैः सहितः प्राण इति वे दा न्ते ष्वपि।

आह—अयुक्तमेतत्। कस्मात्? धर्मिणो धर्म्यन्तर-वृत्तिभावानुपपत्तेः। वृत्तिः इत्ययं शब्दो व्यापारमाचष्टे। न च धर्मान्तरं धर्म्यन्तरस्य व्यापारो भवितुमर्हतीति। उच्यते—न, कार्ये कारणोपचारात्। सत्यमेतत् धर्मोऽयं धर्म्यन्तरस्य वृत्तित्वेनाशक्यः परिकल्पयितुम्, किन्तु सामान्यकरणवृत्त्या प्रेर्यमाणो वायुस्तत्प्रवणत्वात् तत्कार्यतां प्रतिपद्यते। तत्र प्राणादिकार्ये वायौ प्राणोपचारं कृत्वा एवमुच्यते—**प्राणाद्या वायवः [88a]पञ्च।** तत्प्रेरणासिद्धेरयुक्तमिति चेत्, स्यादेतत्—कथमेतदवगम्यते अर्थान्तर-प्रेरितस्य वायोरियं क्रिया भवति, त पुनः स्वतन्त्रस्येति। उच्यते—न स्वतः, तद्व्यति-रिक्तत्वानुपपत्तेः। इहेयमकस्मात् भिन्ना क्रिया वायोः स्वतो वा स्यात्, करणवृत्ति-व्यतिरिक्ताद् वा। किञ्चातः, तन्न तावत् स्वत उपपद्यते। कस्मात्? सर्वत्र प्रसङ्गात्। स्वाभाविके हि वायोर्दिक्सञ्चारेऽभ्युपगम्यमाने सर्वत्र तत्सम्भवः स्यात्। ततश्च तिर्यक्पातादि-वृत्तिर्हन्यते। न चान्यतः। कस्मात्? अदर्शनात्। न हि पृथिव्या-दीनां वायुप्रेरणसामर्थ्यं क्वचिदुपलब्धम्। भस्त्रादिषु दृष्टमिति चेन्न, अन्यनिमित्तत्वात्। अत्रापि चैत्रव्यापार उपलभ्यत इत्यवश्यमन्यन्निमित्तमुपलभ्यत इत्यभ्युपगन्तव्यम्। आत्मेति चेन्न, क्रियाप्रतिषेधात्। उपपादितमेतत् पूर्वमात्मा निष्क्रिय इति। न च निष्क्रियस्य प्रेरणमुपपद्यते। न च निर्निमित्ता स्वभावभेदानामनाकस्मिकत्वात्। तस्मात् यत्र निमित्तं सा समस्तकरणवृत्तिः। स चायं वायुरेक एव स्थानसञ्चारविशेषात् नानाख्यो भवति। यथैको देवदत्तः पाचको लावक इति क्वचित्। तदयुक्तम्। कस्मात्? युगपत् परस्परातिशय-विरोधात्। पूर्वस्मात् पूर्वस्मादुत्तर उत्तरो वायुः बलीयानिति ह्यभ्युपगमः। तदेतदेकस्य एकस्मिन् काले नोपपद्यते; तस्मादुपपन्नं प्राणाद्या वायवः पञ्च।

किं पुनरेषां प्राणादीनां लक्षणमिति। उच्यते—द्विविधाः प्राणादयः, अन्तर्वृत्तयो बहिर्वृत्तयश्च। तत्र मुखनासिकाभ्यां प्रगमनात् प्रणतेश्च प्राणः। योऽयं मुखनासिकाभ्यां सञ्चरति सोऽन्तर्वृत्तिर्वायुः प्राण इत्यभिधीयते, या काचित् प्रणति नाम भूतेषु।

तद् यथा—प्रणतोऽयं सेना, प्रणतोऽयं वृक्षः, प्रणतोऽयं धर्मे, प्रणतोऽयमर्थे, प्रणतोऽयं कामे, प्रणतोऽयं विद्यायाम्। तद्विपरीतेषु वा बाह्यप्राणवृ[88b]त्तिरेषा। प्राणिविषय एवैषा भवति। स खल्वयमत्राभिव्यक्तो भवति। तद् यथा—महता वा दुःखेन अभिप्लुतस्य, महता वा बन्धुना वियुक्तस्य, सहितस्य वा सौरभेयस्य, निपानावतीर्णस्य वा महिषस्यावगतेः। अपक्रमणाच्चापानः, योऽयं रसं धातून् शुक्रं मुत्रं पुरीषं वातार्त्तवगर्भांश्चाकर्षन्नधोगच्छन्, अयमन्तर्वृत्तिर्वायुरपान इत्यभिधीयते। यच्चापि किञ्चिदपक्रमणं नाम भूतेषु, तद् यथा—अपक्रान्तोऽयं धर्मादिभ्य स्तद्विपरीतेभ्यो वा इति बाह्या खल्वपानवृत्तिरेषा अपानविषय एवैष भवति। बलवत्तरश्चायं प्राणात् वायोः। कस्मात्? एषा ह्येतं प्राणमुर्ध्वं वर्त्तमानमर्वागेव सन्नियच्छति, अर्वागेव सन्निरुणद्धि, एषोऽत्राभिव्यक्तो भवति। तद् यथा—उपकूपमुपश्वभ्रं वा परिवर्तमानस्या········ शतपदीं लङ्घयतः। सहावस्थानात् सहभावाच्च समानः। यस्त्वयं प्राणापानयोर्मध्ये सहावतिष्ठते स समानो वायुरन्तर्वृत्तिः। यश्चापि कश्चित् सहभावो नाम भूतेषु द्वन्द्वारामता। तद् यथा—सह दास्ये सह यक्ष्ये सह तपश्चरिष्यामि सह भार्यापुत्रैर्बन्धुभिः सुहृद्भिश्च वर्तिष्य इति बाह्या समानवृत्तिरेषा। समानविषय एवैष भवति, बलवत्तरः खल्वयं प्राणापानाभ्याम्। एष ह्येतौ प्राणापानौ ऊर्ध्वमवाक् च वर्त्तमानौ मध्य एव सन्नियच्छति, मध्य एव सन्निरुणद्धि, स चैषोऽत्राभिव्यक्तो भवति। तद् तथा, स्रुतसारस्य वा सारमेयस्य अनडुहो वोढ़भारस्य घर्माभितप्ताया वा एडकायाः—अर्धार्धकायं शकशकेति। प्राणान्ते सर्वप्राणिनां प्राणपानावुत्सृज्योर्ध्वमधश्च मुक्तयुक्तौ हयाविव विषमं सञ्चारयन् शरीरं स परास्यति। मूर्धारोहणादात्मोत्कर्षणाच्चोदानः। यस्त्वयं प्राणापानसमानानां स्थानान्यतिक्रम्य रसं धातूंश्चादाय मूर्धानमारोहति, [89a] ततश्च प्रतिहतो निवृत्तः स्थानकरणानुप्रदानविशेषात् वर्णपदवाक्यश्लोकग्रन्थलक्षणस्य शब्दस्याभिव्यक्तिनिमित्तं भवति; अयमन्तर्वृत्तिर्वायुरुदान इत्युच्यते। यश्चापि कश्चित् आत्मोत्कर्षो नाम भूतेषु, तद् यथा हीनादस्मि श्रेयान् सदृशेन वा सदृशः, सदृशात् अस्मि श्रेयान्, श्रेयसा वा सदृशः श्रेयसो वा श्रेयान्; एतस्मिंस्तथारूपाभिमानो वा प्राप्तविद्यस्तु। तद् यथा—बह्वन्तरविशेषादल्पान्तरविशेषोऽस्मि, अगुणवतो वा गुणवानस्मीति बाह्योदानवृत्तिरेषा। उदानविषय एवैष भवति। बलवत्तरः खल्वयं पूर्वेभ्यः। कथम्? एष ह्येतान् प्राणादीनूर्ध्वमवाङ् मध्ये च वर्त्तमानान् ऊर्ध्वमेवोन्नयति, ऊर्ध्वमेवोत्कर्षति स चैषोऽत्राभिव्यक्तो भवति, शीतोदकेन वा पर्युक्षितस्य प्राप्तमसिं त्रिकोशं चोद्यतमभिपश्यतः। शरीर-



व्याप्तेरत्यन्ताविनाभावाच्च व्यानः। यस्त्वयमालोम-नखाच्छरीरं व्याप्य रसादीनां धातूनां पृथिव्यादीनां व्यूहं मर्मणाञ्च प्रस्यन्दनं प्राणादीनाञ्च स्थितिं करोति सोऽन्तर्वृत्तिर्व्यानः। यश्चापि कश्चिदत्यन्ताविनाभावो नाम भूतेषु, तद् यथा—पतिव्रता भर्तारं मृतमप्यनुगच्छति भवान्तरेऽप्ययमेव भर्ता स्यात्। तथा धर्मादिभिस्तद्विपरीतैश्चेति बाह्यो व्यानविषय एवैष प्रभवति। बलवत्तमश्चायं सर्वेभ्यः। कथम्? अनेन हि व्याप्ते शरीरदण्डके तद्वशीकृतानां प्राणादीनां समा स्थितिर्भवति। स एषोऽन्तःकाले प्राणभृतामविनाभावेन वर्तमानोऽभिव्यज्यते। तद् यथा—हा तर्हि पादौ हेमौ शीतिभूतौ गुल्फे जङ्घे जानू कटिरुदरमुरःकण्ठेऽस्य घुरघुरो वर्तते....इत्येवैषो बाह्यो व्यान इति। एवमेते प्राणाद्याः स्थानकार्यविशेषसूचिताः पञ्च वायवो व्याख्याता। तेषां प्रेरिका सामान्यकरणवृत्तिः। एषा च त न्त्रा न्त रे षु प्रयत्न इत्युच्यते। [89b] स च धर्मादि-संस्कारभावनावशादनुपरतो जीवनम्। आह च—

'वृत्तिरन्तः समस्तानां करणानां प्रदीपवत्।
अप्रकाशा क्रियारूपा जीवनं कायधारिका॥
सा यावदनिरुद्धा तु हन्ति वायुं रजोऽधिका।
धर्माद्यनावृत्तिवशात् तावज्जीवति मानवः'॥

अत्र च सामान्यकरणवृत्ति-ग्रहणसामर्थ्यात् प्राणाद्याः पञ्च वायवः। बुद्धीन्द्रियाणि षष्ठम्, कर्मेन्द्रियाणि सप्तमम्, पूरष्टमम्—'पूरित्यहङ्कारवस्था संविदमधिकुरुते। यस्मादाह—तत्र संविदहङ्कारगतं कार्यं कारणं पूरयति यस्मात् तस्मात् पूरित्युक्ता प्रत्यवभासाष्टमं भोक्तुः, सा चाहङ्कारगता संविद् बुद्धिगतैव पुरुषेणोपलभ्यते। यस्माद् वक्ष्यति—

एते प्रदीपकल्पाः परस्परविलक्षण गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति॥ (का, ३६)
सर्वं प्रत्युपभोगं यस्मात् साधयति बुद्धिः (का, ३७)

—तस्मात् सैव पूरिति। शास्त्रं चैवमाह—"प्राणापानसमानोदानव्यानाः पञ्च वायवः षष्ठं मनः सप्तमी पूरष्टमी वाक्।" वाग्ग्रहणेन कर्मेन्द्रियपर्वणो ग्रहणम्, मनोग्रहणेन बुद्धीन्द्रियपर्वणः। तदेतत् प्राणाष्टकं वैकारिकं गुणशरीरमस्य परिद्रष्टुः क्षेत्रज्ञस्य शरीरमाददानस्य नित्यं स्तम्भस्थानीयं प्रत्यङ्गं भवति। अच्छेद्यमभेद्यमदाह्यमविनाश्यमविकम्प्यम्। अनित्यानि पुनर्भौतिकानि बाह्यानि शरीराणि कुशमृत्तिकास्थानीयानि उपचीयन्ते चेति।

आह—कुतः पुनरियं प्राणादिवृत्तिः प्रवर्तत इति। उच्यते—सा कर्मयोनिभ्यः

महतः प्रच्युतं हि रजो विकृतमण्डस्थानीयाः पञ्च कर्मयोनयो भवन्ति—धृतिः, श्रद्धा, सुखा, विविदिषा, अविविदिषेति । आह च—

'प्रच्युतो महतो यस्तु न प्राप्तो ज्ञानलक्षणम् ।
व्यापारो ज्ञानयोनित्वात् सा योनिः कुक्कुटाण्डवत् ॥'

तासां लक्षणविषय-सतत्त्वगुणसमन्वया भवन्ति । तत्र ल[ 89a ]क्षणं तावत्—व्यवसायादप्रच्यवनं धृतिः, फलमनभिसन्धाय शास्त्रोक्तेषु कार्येषु अवश्य-कर्त्तव्यताबीजभावः श्रद्धा, दृष्टानुश्रविकफलाभिलाषद्वारको हि बुद्धेराभोगः सुखा, वेत्तुमिच्छा विविदिषा । तन्निवृत्तिरविविदिषा । तत्र यदाऽयं जन्तुः शुभाशुभेषु कार्येषु वृत्त्यनुसारी जिज्ञासुरजिज्ञासुर्वा शरीरं परित्यजति तामेव कर्मयोनिमुपपद्यते । तस्यामुपपन्नस्तामेव भावयति, एतत् तावल्लक्षणसतत्त्वम् । आह च—

[1]वाचि कर्मणि संकल्पे प्रतिज्ञां यो न रक्षति ।
तन्निष्ठस्तत्प्रतिज्ञश्च धृतेरेतद्धि लक्षणम् ॥
अनसूया ब्रह्मचर्यं यजनं याजनं तपः ।
दानं प्रतिग्रहः शौचं श्रद्धाया लक्षणं स्मृतम् ॥
सुखार्थी यस्तु सेवते विद्यां कर्म तपांसि वा ।
प्रायश्चित्तपरो नित्यं सुखायां स तु वर्तते ॥
द्वित्वैकत्वपृथक्त्वं नित्यं चेतनमचेतनं सूक्ष्मम् ।
सत्कार्यमसत्कार्यं विविदिषन्तव्यं विविदिषायाः ॥
विषपीत-सुप्तमत्तवदविविदिषा ध्यानिनां सदा योनिः ।
कार्यकरणक्षयकरी प्राकृतिका गतिः समाख्याता ॥

विषयसतत्त्वं पुनःसर्वविषयिणी धृतिः, आश्रमविषयिणी श्रद्धा, दृष्टानुश्रविकविषयिणी सुखा, व्यक्तविषयिणी विविदिषा, अव्यक्तविषयिणी अविविदिषा । गुणसमन्वयस्तु रजस्तमोबहुला धृतिः, सत्त्वरजोबहुला श्रद्धा, सत्त्वतमोबहुला सुखा, रजोबहुला विविदिषा, तमोबहुला अविविदिषेति । उक्तञ्च—'लक्षणविषयसतत्त्वं त्रैगुण्यसमन्वयश्च पञ्चानां योनीनां यो विद्यात् यतिवृषभं तं त्वहं मन्ये' इत्युक्ताः

1. These couplets are also quoted with slight variations in reading in some of the Commentaries on the *Tattvasamāsa-sūtra*. See the Sūtra —पञ्च कर्मयोनयः.
Also, see notes on p. 9.



प्राणादयो योनयश्च । एतद् द्वयमधिगम्य सम्यङ् मार्गानुगमनं कुर्यात् । रजस्तमोधर्मादि-साधनभावविनिवृत्तिस्त्वत्र प्राणानामन्तर्वृत्तिरनुपाधिकत्वादनिवर्त्या । बहिर्वृत्तिस्तु मार्गा-मार्गविषयतया प्रयोक्तव्या । कथ[ 90b ]मित्युच्यते—प्राणविषया तावत् प्रणतिधर्मादि-विषय एवावरोद्धव्या । ततो ह्यस्य सत्त्ववृद्धिः, सत्त्ववृद्धेश्चोत्तरोत्तरबुद्धिरूपाधिगमः । अपानविषयस्त्वपक्रमणं धर्मादिविषय एवावरोद्धव्यमेवं ह्यस्य ख्यातिविषयाकारकस्य तमसो निर्ह्रासः । ततश्चोत्तरोत्तर-बुद्धिरूपाधिगमः । तथा समानविषयं साहचर्यं सत्त्वधर्मानुगुणं कुर्यात् । यस्मात् शास्त्रमाह—'सत्त्वारामः सत्त्वमिथुनश्च सदा स्यात्' इति । आत्मोत्कर्षं तूदानविषयमविद्यापर्वणोऽन्त्यं रूपं विवर्ज्य तत्प्रतिपक्षे निर्वर्तयेत् । अत्यन्ताविनाभावं च व्यानविषयं ज्ञानविषयमेव भावयेत् । योनीनां चतसृणां धर्मतां बीजतामेवादध्यात् । अविविदिषामपि अनिष्टफलहेतुषु भावयेत् । सोऽयं धर्मादिषु प्रवणस्तत्प्रतिपक्षापक्रान्तः सत्त्वारामो विनिवृत्ताभिमानो ज्ञाननिष्ठः सविशुद्धयोनिरचिरेण परं ब्रह्मोपपद्यत इति । आह च—

'बाह्यां प्राणविवृत्तिं सम्यङ् मार्गे बुधः प्रतिष्ठाप्य ।
विनिवृत्त-विखरकलुषो ध्रुवममृतं स्थानमभ्येति ॥ १ ॥
पञ्चानां योनीनां धर्मादिनिमित्तताञ्च संस्थाप्य ।
परिपक्वमित्यधस्तात् न पुनस्तद्भावितो गच्छेत्' ॥ २ ॥

इति व्याख्याता व्यस्तसमस्तानां करणानां वृत्तिः ।

आह—येयम् एकैकस्मित् रूपादावास्ते करणचतुष्टयस्य वृत्तिः सा किं युगपत्, आहोस्वित् क्रमेणेति । कुतः संशय इति चेत्, उभयथा दृष्टत्वात् । इहैकार्थविषयाणां युगपदपि वृत्तिर्दृष्टा । तद्यथा—चन्द्रमण्डले चक्षुषां मनसो वा । क्रमशश्च, तद्यथा—घटे मधूदकपयसाम् । एकार्थविषयश्च करणचतुष्टयम् । अतो नः संशयः—किं चक्षुर्मनोवद् युगपदस्य वृत्तिः, आहोस्वित् मध्वादिवत् क्रमेणेति । उच्यते—यथादर्शनमपि तावदुच्यताम् । किमत्रयुक्तं भवान् मन्यते । स चेत् सम्यक् उपदेक्ष्यसि को निर्वन्धस्तदेव प्रतिपद्याम[91a ]ह इति । यद्येवं तस्मादिदमस्मद् दर्शनम्—

[ युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥ ]

**युगपच्चतुष्टयस्य तु वृत्तिः ।** तु-शब्दोऽवधारणार्थः, युगपदेव इत्यर्थः । बुद्ध्यहङ्कारमनसां हि बुद्धीन्द्रियाणां च समानदेशत्वम् । तत्र शक्यत एतद्वक्तुम् । सति

शक्तिसद्भावे विषयसम्बन्धे च कस्यचित् तत्र वृत्तिः कस्यचिन्नेति। किञ्चान्यत्—मेघस्तनितादिषु क्रमानुपलब्धेः। यदि हि क्रमेण श्रोत्रादीनामन्तःकरणस्य च बाह्ये अर्थे वृत्तिः स्यादपि तर्हि मेघस्तनित-कृष्णसर्पालोचनादिषु अप्युपलभ्येत क्रमः। न तूपलभ्यते। तस्मात् युगपदेव बाह्येऽर्थे चतुष्टयवृत्तिरिति। उच्यते—यदुक्तं श्रोत्रादीनाम् अन्तःकरणस्य चाभिन्नकालं वृत्तिरित्यत्र ब्रूमः—अयुक्तमेतत्। किं कारणम्? यस्मादस्माकं **क्रमशश्च तस्य निर्दिष्टा।** तस्येति चतुष्टयमभिसम्बध्यते। च-शब्दोऽवधारणार्थः—क्रमश एवेत्यर्थः। क्रमश एव हि बाह्यान्तःकरणवृत्त्योरेकार्थे उपनिपातः। यत्तूक्तं समानदेशानां शक्तिसम्बन्धसद्भावे वृत्त्यभावानुपपत्तिरित्यत्र ब्रूमः—चक्षुरादिवदेतत् स्यात्। यथा च चक्षुस्त्वचोः समानदेशत्वे शक्तिविषयसम्बन्धोपपत्तौ रजोधूमातपादिगतः स्पर्श एवोपलभ्यते न रूपम्, एवमिहापि स्यात्। तस्मात्—**दृष्टे तथाऽप्यदृष्टे** क्रमश एव चतुष्टयस्य वृत्तिः। अदृष्टग्रहणेन पुनरत्रातीतानागतव्यवहितविषयग्रहणम्। तत्रातीतं द्विविधम्—दृष्टविषयमदृष्टविषयञ्च। अत्रापि दृष्टविषयं प्रत्यभिज्ञानमित्यभिप्रेतम्, अदृष्टविषया स्मृतिः। सा तु लिङ्गागमाभ्यामकस्माद्वा भवति। तथा च वृ ष ग ण वी रे णाप्युक्तं भवति— ... ... .... .... .... .... अनागतव्यवहितविषयज्ञानन्तु लिङ्गागमाभ्याम्। आह च—

"विषयेन्द्रियसंयोगात् प्रत्यक्षं ज्ञानमुच्यते।
[ 91b ] तदेवातीन्द्रियं जातं पुनर्भावनया स्मृतिः"॥

तदेव भावनाऽपेक्षज्ञानं कालान्तरे पुनः तत्रैव सेन्द्रियं जातं प्रत्यभिज्ञानमुच्यते। तत्र दृष्टे क्रमं प्रति नास्ति सन्देहः। यत् पुनरेतदुक्तं दृष्टे मेघस्तनित-कृष्णसर्पालोचनादौ क्रमानुपलब्धेर्युगपच्चतुष्टयस्य वृत्तिरित्यत्र ब्रूमः—एतदप्ययुक्तम्। किं कारणम्? यस्मात्—**त्रयस्य तत्पूर्विका वृत्तिः।** न तावत् बुद्ध्यहङ्कारमनसां साक्षात् बाह्यार्थग्रहणसामर्थ्यमस्ति—अन्तःकरणानुपपत्तिप्रसङ्गात्, श्रोत्रादिवैयर्थ्यप्रसङ्गात्, द्वारिद्वारभावव्याघातप्रसङ्गाच्च। तस्मात् पूर्वं श्रोत्रादीनामर्थसम्बन्धोऽस्ति। मेघस्तनितादावप्यवश्यमेतदभ्युपगन्तव्यम्। पश्चात्तु तद्वृत्त्युपनिपातादन्तःकरणस्येत्यस्ति क्रमोऽत्रापि। तन्न युक्तम्। मेघस्तनितादिषु क्रमाननुगते युगपच्चतुष्टयस्य वृत्तिरित्येतदयुक्तम्। अ न्यै स्त्वन्यथाऽन्वयो दर्शितः। तत् यथा—'चतुष्टयस्येति मनोऽहङ्कारबुद्धीनामन्तःकरणानां बाह्येनैकेन करणेन श्रोत्रेण वा चक्षुषा वा सह चतुष्टयस्येत्यर्थः'। अस्य दृष्टे वर्तमाने युगपद्वृत्तिः पू र्वा चा यैः निर्दिष्टाः, आचार्येण तु क्रमेणेत्यर्थः। अदृष्टेऽतीतादावपि क्रमशः क्रमेणैव, यतस्त्रय-



स्यान्तःकरणस्य तत्पूर्विका बाह्येन्द्रियपूर्विका वृत्तिः। यथा यथाऽनुभवस्तथा संस्कारः, यथा च संस्कारस्तथा स्मृतिरित्येवं वृत्तिर्बाह्येन्द्रियपूर्विकेति।

आह—किं पुनरेषां करणानां स्वविषयनियमेन वृत्तिर्भवति, आहोस्वित् व्यतिकरेणेति। उच्यते—ननु च प्रागेव 'रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः' (का, २८) इति चोक्त्वाऽऽचार्येणान्तेऽपदिष्टम्—'सैषा भवत्यसामान्या' (का, २९) इति। तत्रैवं गते भवतः संशयः कुत इत्युच्यते—सत्यमेवैतत्, तथाऽपि जायते संशयः। कुतः? करणान्तरेण स्वविषयोपलब्धौ करणान्तरौत्सुक्यदर्शनात्। [ 92a ] इह करणान्तरेण चक्षुषा मुदा हिमादि(दाडिमादि ?)रूपोपलब्धौ सत्यां करणान्तरस्य जिह्वालक्षणस्य औत्सुक्यं प्रवृत्तिश्चोपलब्धा। तद् यदि स्वविषय-नियतानीन्द्रियाणि, नैषां करणान्तरविषयोपलम्भात् तत्साहचर्यापेक्षः स्वविषय-ग्रहणभावः स्यात्। अस्ति च तस्मात् उपपन्नः संशयः। तत्रेदानीं भवतः का प्रतिपत्तिरित्युच्यते। अत्रापि नास्तीन्द्रियाणां स्वविषयग्रहणव्यतिकरः। किन्तर्हि—

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।**
**पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्॥ ३१॥**

यस्य करणस्य यथावृत्तिरपदिष्टा। तद् यथा—श्रोत्रस्य शब्दग्रहणम्, चक्षुषो रूपग्रहणम् इत्यादि। तामेव प्रतिपद्यन्ते—स्वविषयजिघृक्षयाऽवलम्बन्त इत्यर्थः। परस्परमाकूतं परस्पराकूतम्, आकूतमभिप्रायोऽभिसन्धिरित्यर्थः। परस्पराकूतं हेतुः प्रतिपत्तेरस्याः, सेयं परस्पराकूतहेतुका। परस्पराकूतं प्रतिपत्तेः कारणमिति कृत्वा ताच्छब्द्यं लभते। तद् यथा—दधि...पु संज्वरः। एतदुक्तं भवति यदा चक्षुषा मुदा हिमादिरूपमुपलब्धं भवति तदा रसनेन्द्रियमुपात्तविषयस्य चक्षुषो वृत्तिं संवेद्य स्वविषयजिघृक्षयौत्सुक्यवत् विकारमापद्यते। रसनस्य वृत्तिं संवेद्य पादौ विहरणमारभते हस्तावादानम्, तावत् यावदसौ विषयो रसनेन्द्रिययोग्यतां नीतः ततो रसनं स्वविषये प्रवर्तते। एवमितरेष्वपि वक्तव्यम्।

आह—यद्येवं तेन तर्हीन्द्रियान्तरेण इन्द्रियान्तरस्य वृत्तिः संवेद्यते, प्राप्तमस्य प्रत्ययवत्त्वम्। अथाप्रत्ययमिन्द्रियं परस्पराकूतसंवेदनं तर्हि न वाच्यमिति। किञ्च—परस्पर-द्वारिद्वारभावप्रसङ्गश्च। इन्द्रियान्तरं चेदिन्द्रियान्तरस्य वृत्तिं संवेद्य स्वार्थमाकाङ्क्षेत्, प्राप्तमस्य द्वारित्वमितरस्य च द्वारत्वम्। तद[92b]युक्तमिन्द्रियाणां परस्पराकूतसंवेदनमिति। उच्यते— न, उपचारात्। प्रागेवोपदिष्टमस्माभिरप्रत्यय-

मिन्द्रियमिति। किं तर्हि स्वविषयस्य पटोः सहचारिणमर्थमिन्द्रियान्तरविषयतामापन्नं संस्पृश्य स्वभावत इन्द्रियान्तरं स्वविषयं प्रति साकाङ्क्षं भवति—तत्सन्निधौ विक्रियादर्शनात्। तत्र संवेदनमुपचर्यैवमुच्यत इत्यदोषः। किञ्चान्यत्—भौतिकावयवप्रत्ययविवृत्तिवत् तद्विवृत्तेः। यथा बुद्धेः प्रसादसमनन्तरं भौतिकानामवयवानां मुखनयनादीनां प्रसादो भवति, न चैषां प्रत्ययवत्त्वम्; एवमिहापि स्यात्। न च प्रत्ययवत्त्वम्। एतेन द्वारिद्वारभावः प्रत्युक्तः। मनोऽधिष्ठानसामर्थ्याद्वा। अथवा परस्परविषयमाकूतं परस्पराकूतम्। यथा जलविषयः पुरुषः जलपुरुषः। आकूतमिच्छा संकल्पः मन इत्यर्थः, स हेतुरस्याः सेयं परस्पराकूतहेतुका, ताम्। एतदुक्तं भवति, यदा किञ्चिदिन्द्रियं विषये प्रवृत्तं भवति तदा तद्द्वारेण समस्तमर्थमुपलभ्य तत्सहचारिणमर्थान्तरमाकाङ्क्षत् इन्द्रियान्तरं वृत्त्या प्रतितिष्ठते। तेनाकाङ्क्षवता मनसाऽधिष्ठितमिन्द्रियं विक्रियामापद्यते। तथाच तन्त्रान्तरे प्युक्तम्—"यस्य यस्येन्द्रियस्य विषयं मनो ध्यायत्यभिसंपत्त्यर्थेन तस्य तस्यौत्सुक्यं प्रवृत्तिश्च भवति" इति। एतदुक्तं स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिमिति। किमिन्द्रियं मनो वृत्त्याऽधिष्ठाय स्वविषये प्रवर्त्तयति, यथा परश्वादि चैत्र इति। नेत्युच्यते, किं तर्हि स्वविषयसंकल्पानुगृहीतस्य मनसः संस्पर्शात् स्वयमेवेन्द्रियं स्वविषयं प्रतिपद्यते। कस्मात्? प्रयोगशक्त्यसिद्धेः। न हि यथा चैत्रस्य परश्वादिप्रयोगशक्तिः सिद्धा, एवं मनस इन्द्रियप्रयोगशक्तिः। तस्मादयुक्तमिन्द्रियस्य मनः प्रेरकमिति। रज इति, [ 93a ] स्यान्मतम्—रजसो हीन्द्रियान्तरप्रयोगसामर्थ्यं विद्यते। तस्मादयुक्तमुक्तं प्रयोगशक्त्यसिद्धेर्नेन्द्रियाणां मनः प्रयोजकमिति। एतच्चायुक्तम्। कस्मात्? अविशेषात्। इन्द्रियान्तरेऽपि हि तर्हि रजोऽस्तीत्यत आत्मभूतेनैव अस्य निमित्तेन प्रवृत्तिरप्रतिषिद्धा, किं पुनः सा परिकल्पितेनेति। किञ्चान्यत्—करणान्तरानुपपत्तेः। चैत्रो हि परश्वादीनां प्रयोगं करणान्तरेण करोति। न तु मनसः करणान्तरमस्तीत्यसमानम्। पाणिवदिति चेन्न चैत्रव्यापारापेक्षत्वात्। तदपि हि चैत्रव्यापारापेक्षं प्रवर्तते न स्वतः। किञ्च—तद्व्यतिरेकेण प्रवृत्त्युपलब्धेः। यस्य हि प्रयोजकान्तरापेक्षा प्रवृत्तिः न तस्य कदाचिदपि स्वतन्त्रस्य भवति। अस्ति तु संकल्पव्यतिरेकेण मेघस्तनितादिष्विन्द्रियस्य प्रवृत्तिः। तस्मान्नेन्द्रियान्तरस्य मनः कारकम्। न चेत् कारकं यथा मौलानां गुणानाम्, एवमिहापि पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणमिति सिद्धम्।

आह—करणं प्रत्याचार्यविप्रतिपत्तेः। एकादशविधमिति वार्षगणाः, दशविधमिति तान्त्रिकाः पञ्चाधिकरणप्रभृतयः, द्वादशविधमिति पतञ्जलिः। तस्माद् भवतः कतिविधं करणमभिप्रेतमिति वक्तव्यमेतत्। उच्यते—



[ करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।
कार्यञ्च तस्य दशधा, आहार्यं धार्यं प्रकाश्यञ्च ॥ ३२ ॥]

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।** पञ्च कर्मेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि मनोऽहङ्कारबुद्धिश्चेत्येतत् सर्वं पुरुषार्थोपयोगिकरणम्। कस्मात्? अपुरुषार्थोपयोगित्वे तत्त्वान्तरानुपपत्तिप्रसङ्गात्। यदि यथा वार्षगणा आहुः—'लिङ्गमात्रो महानसंवेद्यः कार्यकारणरूपेणाविशिष्टो विशिष्टलक्षणेन तथा स्यात् तत्त्वान्तरम्'। तन्न स्यात् अनर्थकत्वात्।

आ[ 93b ]ह—सत्यं प्रधानलक्षणानां गुणानां वैषम्यमात्ररूपत्वेऽपि तत्त्वान्तरमसौ भविष्यतीति। कस्मात्? साम्यात् वैषम्यमुपाख्याऽन्तरमिति। एतच्चायुक्तम्। कस्मात्? तत्त्वानवस्थाप्रसङ्गात्। एवं हि परिकल्प्यमाने प्रधानमहतोर्यदन्तरालं तत्त्वान्तराणां तदपि च क्रियारूपत्वादक्रियावत उपाख्याऽन्तरमिति तत्त्वान्तरानवस्थाप्रसङ्गः, अभ्युपगमे वा महतस्तत्त्वान्तराणां च क्रियाकालविरोधः। तस्मात् तत्त्वान्तरानुपपत्तिः। अनवस्था वा, त्रयोदशविधं करणमित्यन्यतरवदवश्यमभ्युपगन्तव्यम्। तत्र चास्मत्प्रतिज्ञातमेव निर्दोषं लक्ष्यते। तस्मादुपपन्नमेतत् त्रयोदशविधं करणमिति।

आह—करणमिति क्रियाकारकसम्बन्धगर्भोऽयं निर्देशः। कथम्? येन ( क्रियते ) तत् करणमिति। तत्र वक्तव्यम् का क्रिया किञ्च तत् क्रियते, यदपेक्ष्य बुद्ध्यादीनां करणत्वमिति। उच्यते—यदुक्तं का क्रिया इत्यत्र ब्रूमः—न तन्निर्वर्त्यमिहाभिप्रेतम्, दण्डादिवत्। किं तर्हि? तदाहरणधारणप्रकाशकरम्। तत्राहरणं कर्मेन्द्रियाणि कुर्वन्ति विषयार्जनसमर्थत्वात्, धारणं बुद्धीन्द्रियाणि कुर्वन्ति—विषयसन्निधाने सति श्रोत्रादिवृत्तेस्तद्रूपापत्तेः, प्रकाशमन्तःकरणं करोति निश्चयसामर्थ्यात्। अपर आह—आहरणं कर्मेन्द्रियाणि कुर्वन्ति, धारणं मनोऽहङ्कारश्च, प्रकाशनं बुद्धीन्द्रियाणि बुद्धिश्चेति। एतदभिसन्धाय बुद्ध्यादीनां करणत्वमुच्यत इति। यत्तुक्तं किं कार्यमिति, उच्यते—**कार्यञ्च तस्य दशधा।** दशधेति पञ्च विशेषाः पञ्चाविशेषाः, तदप्यत एव कार्यशब्दं लभते—**आहार्यं धार्यं प्रकाश्यञ्च।** तद्धि आहर्तव्यं धारणीयं प्रकाशयितव्यञ्च, अतः कार्यमित्युच्यते, न निर्वर्त्यत्वात्।

एतस्मिंस्त्रयोदशविधे तु करणे त्रयोदशं कतरदिति। उच्यते—बुद्धिरहङ्कारो मनश्च। तस्मात्—

[ अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥ ]

**अन्तःकरणं त्रिविधम्।** कस्मात्? विषयानभिसन्धानात्। श्रोत्रादिप्रणालिकया च विषयसम्प्रतिपत्तेः। [ 94a ] अविशेषाभिधानाद् बुद्ध्यादिप्रतिपत्तिरयुक्तेति चेत्, स्यान्मतम्—अविशेषेण इदमुक्तमाचार्येण अन्तःकरणं त्रिविधमिति। तत्र कथमिदमवगम्यते बुद्ध्यहङ्कारमनसां ग्रहणमिहाभिप्रेतम्, न पुनरन्येषामिति। उच्यते—न, प्रथमसंख्याव्यतिक्रमहेत्वनुपपत्तेः। बुद्ध्यादिसंख्यां हि व्यतिक्रममाणस्य प्रतिपत्तौ नास्ति हेतुः। तस्मात् तेषामेव ग्रहणम्, यथा 'वसन्ताय कपिञ्जलानालभेत' इति। श्रोत्रस्यान्तःकरणत्वप्रसङ्गात् अयुक्तमिति चेत्, स्यादेतत्—बुद्धिमहङ्कारञ्चोक्त्वा तत आह—'बुद्धीन्द्रियाणि कर्णत्वक्चक्षूरसननासिकाऽऽख्यानि' (का, २६) इति। तस्मात् श्रोत्रमन्तःकरणं प्रसज्यत इति। एतदनुपपन्नम्। कस्मात्? मनसः पृथगभिधानात्। अतएवेदमाचार्येणापेक्ष्य मनसोऽन्तःकरणत्वं पृथक् उक्तम्—'तच्चेन्द्रियमुभयथा समाख्यातम्, अन्तस्त्रिकालविषयम्' (का, २७) इति। तस्मादुपपन्नमन्तःकरणं त्रिविधं बुद्ध्यादीति। **दशधा बाह्यम्।** पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि। पञ्चकर्मेन्द्रियाणीत्येतद् बाह्यं दशप्रकारमाचार्यैराख्यायते।

आह—दशधा बाह्यमित्यस्यानर्थक्यम्। परिशेषबुद्धेरन्तःकरणं त्रिविधमित्युक्ते गम्यत एतत् परिशेषादेव दशधा बाह्यमिति। तस्मात् तद्ग्रहणमनर्थकमिति। उच्यते—न, विषयार्थत्वात्। त्रयस्य विषयाख्यमित्येवं वक्ष्यामीत्याचार्य आरभते। अक्रियमाणे तस्मिन् किं तत् त्रयस्य विषयाख्यमिति न ज्ञायते।

आह—एवमपि विषयग्रहणात् सिद्धेर्बाह्यग्रहणमपार्थकमित्युच्यते, वक्तव्यं तावत् इदमवश्यं विषयभावप्रतिपत्त्यर्थम्। तत्र शेषे वा यथान्यासं वोच्यमाने न कश्चिद् विशेषः। अथवा नेदं वाह्यं संज्ञाप्रतिपत्त्यर्थमारभ्यते, किं तर्हि नियमार्थम्। कथम्? दशधा बाह्यं[94b] शब्दादिविषयग्रहणभूतमेव त्रयस्यापि विषयाख्यं यथा स्यात् माभूदन्तः प्राणादिभूतम्। अथवा दशधैव बाह्यं भेदविषयं बाह्यमित्यर्थः। प्राणादिभूतस्य तु भेदो नास्तीत्यदोषः। तदेतत् **त्रयस्य विषयाख्यम्**—बुद्ध्यहङ्कारमनोलक्षणस्य हि त्रयस्योपात्तविषया बुद्धीन्द्रियकर्मेन्द्रियवृत्तयः सम्पर्कात् विषयरूपप्रत्ययवभासनिमित्ततामुपगच्छन्त्यो विषयाख्यतां लभन्ते, तथा मनोऽहङ्कारावपि बुद्धेः। बुद्धिस्तु निश्चयरूपत्वात् करणान्तरनिरपेक्षा सर्वमर्थं प्रवृत्तौ प्रतिनिश्चयरूपेणाध्यस्तं पुरुषायोपसंहरति। तत्र शब्दादिसन्निधाने वृत्तीनां ताद्रूप्यापत्तेस्तदपगमे च ताद्रूप्यापगमात् प्राप्यकारि। **साम्प्रतकालं बाह्यम्।** उपात्तविषयेन्द्रियवृत्तिसन्निधानात् तु तदाकारसंस्काराधाननिमित्तस्मृतिप्रत्ययवशात्—**त्रिकालमाभ्यन्तरं करणम्।**



आह—प्राक् शब्दादिषु श्रोत्रादीनामालोचनमात्रं वृत्तिरित्यविशेषेणोक्तम्। तत्र किं तथैव प्रतिपत्तव्यमथेन्द्रियाणां विषयविशेषोऽस्तीति, अथचोक्तं कार्यं च तस्य दशधा विशेषलक्षणमविशेषलक्षणञ्च। तत्र केन करणेन कस्य विषयस्य ग्रहणमिति। उच्यते—

[ बुद्धिन्द्रियाणी तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग् भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥ ]

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।** तेषां पूर्वोक्तानामिन्द्रियाणां यानि बुद्धीन्द्रियाणि पञ्च श्रोत्रादीनि तानि विशेषाविशेषविषयाणि प्रतिपत्तृभेदेन। तत्र देवानां यानीन्द्रियाणि तानि धर्मोत्कर्षात् विशुद्धान्यविशेषानपि गृह्णन्ति प्रागेव विशेषात्, योगिनाञ्च सम्प्राप्तविशेषाणाम्। अस्मदादीनान्तु विशेषानेव, तमसा परिवृतत्त्वात्।

आह—किं कर्मेन्द्रियाणामपि प्रतिपत्तृभेदाद् ग्रहणभेदो भवति। नेत्युच्यते, किं तर्हि सर्वेषामेव—**वाग् भवति शब्दविषया।** वागिन्द्रियस्य वाय्वभिहतेषु वदनप्रदेशेषु ताल्वादि[ 95a ]षु ध्वनेर्वर्णपदवाक्यश्लोकग्रन्थभावेन विकारापादनं सर्वप्राणिनामविशिष्टम्।

आह—अथेतराणि कर्मेन्द्रियाणि कथमित्युच्यते—**शेषाण्यपि पञ्चविषयाणि।** पाणिपादपायूपस्थास्तु आदानविहरणोत्सर्गानन्दलक्षणैः कर्मभिः शब्दस्पर्शरसरूपगन्धसमुदायरूपा मूर्तीर्विकुर्वन्तीति।

आह—यदि पञ्चविषयाण्येवाविशेषाणीति नियमोऽभ्युपगम्यते तेनैकैकाकरणेष्वादानादिक्रियानुपपत्तिप्रसङ्ग इति। उच्यते—न, नियमप्रतिषेधार्थत्वात्। स्वविषयनियमो बुद्धीन्द्रियवत् कर्मेन्द्रियाणामपि मा विज्ञायीत्यतो नियमप्रतिषेधार्थमिदमारभ्यते। तदर्थमेव चापिशब्दमाचार्योऽधिजगे। सम्भावनार्थमपि च पञ्चविषयाण्येतानि प्रागेव तु चतुस्त्रिविषयाणीति।

आह—कथमेतदवगम्यते विशेषाविशेषविषयाणीन्द्रियाणि न पुनरसद्विषयाणीति। उच्यते—विशेषाणामसत्त्वासिद्धेः। प्रत्यक्षतस्तावत् विशेषा उपलभ्यन्ते। तस्मादेषामसत्त्वमशक्यं प्रतिज्ञातुम्। अथापि स्यात् साध्यमेतत् प्रत्यक्षमेवैतत् अनवद्यम्—बाह्यवस्तुविषयमयमृगतृष्णिकादिविज्ञानवत् प्रत्यक्षाभासम्। एतच्चायुक्तम्। कस्मात्? विकल्पानुपपत्तेः। सर्वमभूतमभ्युपगन्तव्यम्। यतो नास्ति किञ्चिद् भूतार्थेन प्रत्यक्षं यदपेक्ष्येतरत् प्रत्यक्षाभासं स्यात्। उक्तस्त्वयं विकल्पः। तस्माद्युक्तं ज्ञानमात्रमिदमिति। किञ्चान्यत्—

**अन्तःकरणं त्रिविधम्।** कस्मात्? विषयानभिसन्धानात्। श्रोत्रादिप्रणालिकया च विषयसम्प्रतिपत्तेः। [ 94a ] अविशेषाभिधानाद् बुद्ध्यादिप्रतिपत्तिरयुक्तेति चेत्, स्यान्मतम्—अविशेषेण इदमुक्तमाचार्येण अन्तःकरणं त्रिविधमिति। तत्र कथमिदमवगम्यते बुद्ध्यहङ्कारमनसां ग्रहणमिहाभिप्रेतम्, न पुनरन्येषामिति। उच्यते—न, प्रथमसंख्याव्यतिक्रमहेत्वनुपपत्तेः। बुद्ध्यादिसंख्यां हि व्यतिक्रममाणस्य प्रतिपत्तौ नास्ति हेतुः। तस्मात् तेषामेव ग्रहणम्, यथा 'वसन्ताय कपिञ्जलानालभेत' इति। श्रोत्रस्यान्तःकरणत्वप्रसङ्गात् अयुक्तमिति चेत्, स्यादेतत्—बुद्धिमहङ्कारञ्चोक्त्वा तत आह—'बुद्धीन्द्रियाणि कर्णत्वक्चक्षूरसननासिकाऽऽख्यानि' (का, २६) इति। तस्मात् श्रोत्रमन्तःकरणं प्रसज्यत इति। एतदनुपपन्नम्। कस्मात्? मनसः पृथगभिधानात्। अतएवेदमाचार्येणापेक्ष्य मनसोऽन्तःकरणत्वं पृथक् उक्तम्—'तत्रेन्द्रियमुभयथा समाख्यातम्, अन्तस्त्रिकालविषयम्' (का, २७) इति। तस्मादुपपन्नमन्तःकरणं त्रिविधं बुद्ध्यादीति। **दशधा बाह्यम्।** पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि। पञ्चकर्मेन्द्रियाणीत्येतद् बाह्यं दशप्रकारमाचार्यैराख्यायते।

आह—दशधा बाह्यमित्यस्यानर्थक्यम्। परिशेषबुद्धेरन्तःकरणं त्रिविधमित्युक्ते गम्यत एतत् परिशेषादेव दशधा बाह्यमिति। तस्मात् तद्ग्रहणमनर्थकमिति। उच्यते—न, विषयार्थत्वात्। त्रयस्य विषयाख्यमित्येवं वक्ष्यामीत्याचार्य आरभते। अक्रियमाणे तस्मिन् किं तत् त्रयस्य विषयाख्यमिति न ज्ञायते।

आह—एवमपि विषयग्रहणात् सिद्धेर्बाह्यग्रहणमपार्थकमित्युच्यते, वक्तव्यं तावत् इदमवश्यं विषयभावप्रतिपत्त्यर्थम्। तत्र शेषे वा यथान्यासं वोच्यमाने न कश्चिद् विशेषः। अथवा नेदं बाह्यं संज्ञाप्रतिपत्त्यर्थमारभ्यते, किं तर्हि नियमार्थम्। कथम्? दशधा बाह्यं[94b] शब्दादिविषयग्रहणभूतमेव त्रयस्यापि विषयाख्यं यथा स्यात् माभूदन्तः प्राणादिभूतम्। अथवा दशधैव बाह्यं भेदविषयं बाह्यमित्यर्थः। प्राणादिभूतस्य तु भेदो नास्तीत्यदोषः। तदेतत् **त्रयस्य विषयाख्यम्**—बुद्ध्यहङ्कारमनोलक्षणस्य हि त्रयस्योपात्तविषया बुद्धीन्द्रियकर्मेन्द्रियवृत्तयः सम्पर्कात् विषयरूपप्रत्यवभासनिमित्ततामुपगच्छन्त्यो विषयाख्यतां लभन्ते, तथा मनोऽहङ्कारावपि बुद्धेः। बुद्धिस्तु निश्चयरूपत्वात् करणान्तरनिरपेक्षा सर्वमर्थं प्रवृत्तौ प्रतिनिश्चयरूपेणाध्यस्तं पुरुषायोपसंहरति। तत्र शब्दादिसन्निधाने वृत्तीनां ताद्रूप्यापत्तेस्तदपगमे च ताद्रूप्यापगमात् प्राप्यकारि। **साम्प्रतकालं बाह्यम्।** उपात्तविषयेन्द्रियवृत्तिसन्निधानात् तु तदाकारसंस्काराधाननिमित्तस्मृतिप्रत्ययवशात्—**त्रिकालमाभ्यन्तरं करणम्।**



आह—प्राक् शब्दादिषु श्रोत्रादीनामालोचनमात्रं वृत्तिरित्यविशेषेणोक्तम्। तत्र किं तथैव प्रतिपत्तव्यमथेन्द्रियाणां विषयविशेषोऽस्तीति, अथचोक्तं कार्यं च तस्य दशधा विशेषलक्षणमविशेषलक्षणञ्च। तत्र केन करणेन कस्य विषयस्य ग्रहणमिति। उच्यते—

[ बुद्धिन्द्रियाणी तेषां पञ्च विशेषाविशेषविषयाणि।
वाग् भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥ ]

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।** तेषां पूर्वोक्तानामिन्द्रियाणां यानि बुद्धीन्द्रियाणि पञ्च श्रोत्रादीनि तानि विशेषाविशेषविषयाणि प्रतिपत्तृभेदेन। तत्र देवानां यानीन्द्रियाणि तानि धर्मोत्कर्षात् विशुद्धान्यविशेषानपि गृह्णन्ति प्रागेव विशेषात्, योगिनाञ्च सम्प्राप्तविशेषाणाम्। अस्मदादीनान्तु विशेषानेव, तमसा परिवृतत्त्वात्।

आह—किं कर्मेन्द्रियाणामपि प्रतिपत्तृभेदाद् ग्रहणभेदो भवति। नेत्युच्यते, किं तर्हि सर्वेषामेव—**वाग्भवति शब्दविषया।** वागिन्द्रियस्य वाय्वभिहतेषु वदनप्रदेशेषु ताल्वादि[ 95a ]षु ध्वनेर्वर्णपदवाक्यश्लोकग्रन्थभावेन विकारापादनं सर्वप्राणिनामविशिष्टम्।

आह—अथेतराणि कर्मेन्द्रियाणि कथमित्युच्यते—**शेषाण्यपि पञ्चविषयाणि।** पाणिपादपायूपस्थास्तु आदानविहरणोत्सर्गानन्दलक्षणैः कर्मभिः शब्दस्पर्शरसरूपगन्धसमुदायरूपा मूर्त्तीर्विकुर्वन्तीति।

आह—यदि पञ्चविषयाण्येवाविशेषाणीति नियमोऽभ्युपगम्यते तेनैकैकाकरणेष्वादानादिक्रियानुपपत्तिप्रसङ्ग इति। उच्यते—न, नियमप्रतिषेधार्थत्वात्। स्वविषयनियमो बुद्धीन्द्रियवत् कर्मेन्द्रियाणामपि मा विज्ञायीत्यतो नियमप्रतिषेधार्थमिदमारभ्यते। तदर्थमेव चापिशब्दमाचार्योऽधिजगे। सम्भावनार्थमपि च पञ्चविषयाण्येतानि प्रागेव तु चतुस्त्रिविषयाणीति।

आह—कथमेतदवगम्यते विशेषाविशेषविषयाणीन्द्रियाणि न पुनरसद्विषयाणीति। उच्यते—विशेषाणामसत्त्वासिद्धेः। प्रत्यक्षतस्तावत् विशेषा उपलभ्यन्ते। तस्मादेषामसत्त्वमशक्यं प्रतिज्ञातुम्। अथापि स्यात् साध्यमेतत् प्रत्यक्षमेवैतत् अनवद्यम्—बाह्यवस्तुविषयमयमृगतृष्णिकादिविज्ञानवत् प्रत्यक्षाभासम्। एतच्चायुक्तम्। कस्मात्? विकल्पानुपपत्तेः। सर्वमभूतमभ्युपगन्तव्यम्। यतो नास्ति किञ्चिद् भूतार्थेन प्रत्यक्षं यदपेक्ष्येतरत् प्रत्यक्षाभासं स्यात्। उक्तस्त्वयं विकल्पः। तस्मादयुक्तं ज्ञानमात्रमिदमिति। किञ्चान्यत्—

विपरीतदर्शनप्रसङ्गात्। मृगतृष्णिकास्वप्नविषयैरसद्भिः सतामसत्त्वमिच्छतस्तद्वदेव विपरीतदर्शनप्रसङ्गः। तथा हि गन्धर्वनगरादिषु कदाचित् तमेवार्थं गां पश्यति, कश्चित् गजं पश्यति, कदाचित् पताकाम्। स्वप्ने चैकमूर्त्तिपतितानां गोपुरुषाश्व-रासभनदीवृक्ष-प्रभृतीनां दर्शनम्, स्मरणे ( जागरणे ? ) विपर्ययेण दृष्टम्। तथा वातायनेन हस्ति-यू [95b]थ-प्रवेशने ...... विच्छिन्नानां चावयवानां पुनः सन्धानम्, आकाशगमनमनीश्वर-स्यानिमित्तं राज्यलाभ इति। तदितर(त्र) अपि स्यात्। नत्वस्ति। तस्मादयुक्तं मृगतृष्णिकास्वप्नादिवदसत्त्वं भावानाम्।

*अर्थक्रिया च न स्यात्। यथा स्वप्ने स्नातानुलिप्ताशितपीतवस्त्राच्छादितानाम-फलत्वं दृष्टम्, एवमिहापि स्यात्। शुक्रविसर्गवदिति चेत्, स्यादेतत्—यथा द्वयसमापत्ति-पूर्वकः शुक्रविसर्गः स च तदभावेऽपि स्वप्ने भवति, एवमितरत् स्यादिति। तदयुक्तम्—रागादिनिमित्तत्वात्। तथा हि—जाग्रतोऽपि तद् द्वयसमापत्तिमन्तरेण भवति। तस्मात् मनोरञ्जनानिमित्तं तत्। प्रेतवदिति चेत, स्यादियं मम सद् बुद्धिः। यथा प्रेतानामसद्भिः पूय-नद्यादिभिरर्थक्रिया नरक-पालैश्च बाधनम, एवमत्रापि स्यादिति। तदयुक्तम-सिद्धत्वात्। न ह्येतदसदिति सिद्धम्। किञ्च प्रत्यक्षेण चाप्रत्यक्षबाधनादिह प्रत्यक्षं बलीय इत्यप्रत्यक्षस्य तेन प्रत्याख्यानमुपपद्यते। भवन्तस्त्वप्रत्यक्षेण प्रत्यक्षं प्रत्याचक्षते। तस्मादयुक्तं नरक-पालादिवदसतामर्थक्रियेति। स्वभावभेदात् तदसत्त्वमिति चेत्, स्यादेतत्—यदि परमार्थतो नरक-पालाः स्यु स्तेषामपि दुःखसम्बन्धः स्यात् मूर्त्तिमत्त्वा-विशेषात्। न तु तेषां बाधोऽस्ति। तस्माद् भ्रान्तिरसाविति। एतदयुक्तम्। कस्मात् ? कर्मशक्तिवैचित्र्यात्। प्रत्यक्षमेव तावत् कर्मनिमित्तो वाग्बुद्धिस्वभावाहारविहारशक्ति-भेदभिन्नो विचित्रः संसार उपलभ्यते। स निपुनमवेक्षितुमशक्यः, गम्भीरत्वात्। किं पुनरप्रत्यक्षकर्मणां विपाकवैश्वरूप्यमतर्कगोचरमस्मदादिबुद्धयः परिच्छेत्स्यन्ति।

---

*For a clear understanding of the arguments as advanced by the author in this paragraph, see the following verses and the Commentary of *Vasubandhu* upon them—

'देशादिनियमः सिद्धः स्वप्नवत् प्रेतवत् पुनः।
सन्तानानियमः सर्वैः पूयनद्यादिदर्शने ॥ ३ ॥
स्वप्नोपघातवत् कृत्यक्रिया नरकवत् पुनः।
सर्वं नरकपालादिदर्शने तैश्च बाधने' ॥ ४ ॥

*Viṁśatikā Vijñaptimātratā-siddhi.*



तस्मान्मनोरथमात्रमेतत्। धर्माधर्मानुपपत्तिश्च स्यात्। यथा स्वप्ने ब्रह्महत्यासुरा-पानागम्यगमनादीनामफलत्वम्, एवमितरत्रापि स्या[ 96a ]त् असदविशेषात्। [1]मिद्धो-पघातात् तद्विशेष इति चेत्- न, अविशेषात्। असत्त्वे तुल्ये क्वचिदुपघातः क्वचिन्नेतीच्छा-मात्रमेतत्। एवं चेत् नासन्तः पृथिव्यादयः। न चेदसन्तो युक्तमुपदिष्टं बुद्धीन्द्रियाणि तेषां पञ्च विशेषविषयाणीति।

इति श्रीयुक्तिदीपिकायां सप्तममाह्निकम्।

---

1 Cf. मिद्धेनोपहतं चित्तं स्वप्ने तेनासमं फलम् ॥ १८ ॥
*Viṁśatikā, Vijñaptimātratā Siddhi.*

यदा तु सति पूर्वदोषे सति वा ग्रामनगरनिगमसन्निवेशाद्युपायानुष्ठानाद् वा कृतविषयरक्षो योगी क्षयदोषमुपन्यस्यति — कथम् ?

"येन द्रव्येन मोहाद् वा रन्तुमिच्छन्ति देहिनः ।
तदेवैषां विनाशित्वाद् भवत्यरतिकारणम् ॥ १ ॥
यत्नोपात्ताः सुगुप्ताश्च विषया विषयैषिणाम् ।
पश्यतामेव नश्यन्ति बुद्बुदाः सलिले यथा ॥ २ ॥
न तदस्ति जगत्यस्मिन् भूतं स्थावरजङ्गमम् ।
प्रत्यक्षतोऽनुमानाद् वा विनाशो यस्य नेक्ष्यते ॥ ३ ॥
तस्माद् विनाशिष्वासक्तानां पुत्रदारगृहादिषु ।
ममेति बुद्धिं यत्नेन बुद्धिमान् विनिवर्तयेत्" ॥ ४ ॥ इति ।

एतस्माद् दर्शनात् माध्यस्थ्यं लभते सा सप्तमी तुष्टिः सुनेत्रमित्युच्यते । कथं पुनः सुनेत्रमिति — उच्यते, सुखमनेनात्मानं कैवल्यावस्थां नयन्तीति सुनेत्रम् ।

यदा तु सत्सु पूर्वदोषेषु प्रसङ्गदोषमुपन्यस्यति, कथम्-प्राप्तविषयाणामिन्द्रियाणां तदभिलाषान्निवृत्तिस्तत् सुखम्, विषयजिघृक्षया च दुःखम् । प्राप्तिरप्येषामनुपशान्तये तदुपभोगकौशलाय च । यस्मादाह—

"यदा प्रबन्धाद् विषयी विषयानुपसेवते ।
तदास्यैतस्त्वभिप्रायः सुतरां सम्प्रवर्तते ॥ १ ॥
अतोऽपि येन पुरुषः शमयेद् बड़वानलम् ।
नेन्द्रियाण्युपभोगेन विषयेभ्यो निवर्तयेत् ॥ २ ॥
तस्माद्विषयसम्पर्कमसमर्थ निवर्तते ।
इन्द्रियाणां परिज्ञाय निरासङ्गमतिश्चरेत्" ॥ ३ ॥ इति ।

एतस्माद् दर्शनात् माध्यस्थ्यं लभते साऽष्टमी तुष्टिः सुमारीचमित्युच्यते । कथं सुमारीचमित्युच्यते—अर्चतेः पूजार्थस्य शोभनमर्चितं विषयसङ्गनिवृत्तस्य योगिनोऽवस्थानं भवति ।

[ 112a ] यदा तु पूर्वदोषेषु हिंसादोषमुपन्यस्यति, कथम्—अनुपहत्यान्यभूतानि विषयभोगानुपपत्तेः । उपभोगो हि नाम मनोज्ञाभ्यवहारः, स्त्रीसेवा, हयगजनरादिभिर्यानमित्येवमादि । तत्र मनोज्ञाभ्यवहारचिकीर्षुणा तदङ्गानां गोऽजाविबलीवर्दस्त्रीपुरुषादीनामवश्यमुपघातः कार्यः । अनुपघाते वा विषयानुपपत्तिप्रसङ्गः । स्त्रियमासेवमानेनान्यासां स्त्रीणां मातृपितृभ्रातृप्रभृतीनां चान्यथा तदभावः हयादीनाम् ।



तस्मादुपभोगार्थिनाऽवश्यमन्योपघातः कार्यो निहितदण्डेन वा विषयोपभोगस्त्याज्य इति । आह च—

"यथा यथा हि विषयो वृद्धिं गृह्णाति देहिनाम् ।
अपघातस्तदङ्गानां तथैवास्य विवर्धते ॥ १ ॥
तस्मादनिच्छन्नन्येषां प्राणिनां देहपीडनम् ।
सन्तोषेनैव वर्तेत त्यक्तसर्वपरिच्छदः ॥ २ ॥
सत्यवाचः प्रशान्तस्य सर्वभूतान्यनिच्छतः ।
भावान्धकारान्न ज्ञानमचिरेण प्रवर्तते" ॥ ३ ॥ इति ।

एतस्माद् दर्शनात् माध्यस्थ्यं लभते सा नवमी तुष्टिरुत्तमाभयमित्यपदिश्यते । कथम् ? उत्तमं हि प्राणिनां सर्वेभ्यो भयेभ्यो हिंसाभयमिति तदपगमात् उत्तमाभयमिति । परोपघातदोषः अपदिष्टोऽस्यामपि च । तत्र कथमनयोर्विशेषः प्रतिपत्तव्य इति । उच्यते—न, विषयभेदात् ।

आह—अर्जनरक्षणलक्षणयोरपि तुष्ट्योः तत्र येषामर्जनरक्षणे प्रत्याद्रियते विषयी तद[ 112b ]र्थिना प्रत्यनीकानामवश्यमभिघातोऽनुष्ठातव्य इत्यादावुक्तम् । इह तु येषामेवार्जनरक्षणे तदनुपघातेनाशक्यो विषयोपभोग इत्येतद् विवक्षितम् । तस्मात् असङ्कीर्णमेतदित्येवमम्भःप्रभृतयो नवविषयेभ्यः सङ्गद्वेषनिवृत्तिहेतवो व्याख्याताः । ते ज्ञानविरहितानां योगिनां तुष्टिशब्दवाच्यतां लभन्ते । ज्ञानिनां तु वैराग्यपर्वसंज्ञिता स्वासु स्वासु तत्त्वभूमिषु सिद्धा एवेति ।

आह—प्रागपदिष्टमष्टधा सिद्धिरिति तदिदानीमभिधीयतामिति । उच्यते—

[ ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥ ]

**ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः, दानञ्च सिद्धयोऽष्टौ ।** तत्रोहो नाम यदा प्रत्यक्षानुमानागम-व्यतिरेकेणाभिप्रेतमर्थं विचारणाबलेनैव प्रतिपद्यते साऽऽद्या सिद्धिः तारकमित्यपदिश्यते—'तारयति संसारार्णवादिति तारकम् । यदा तु स्वयं प्रतिपत्तौ प्रतिहन्यमानो गुरूपदेशात् प्रतिपद्यते सा द्वितीया सिद्धिः सुतारमित्यपदिश्यते । कथम् ? सुखमनेनाद्यत्वेऽपि भवसङ्कटात् तरन्तीति ।

1 For the explanation of the technical terms, also see the Sub-Commentary of Paramārtha on Kā, 51.

यदा त्वन्योपदेशादप्यसमर्थः प्रतिपत्तुमध्ययनेन साधयति सा तृतीया सिद्धिः तारयन्तमित्यपदिश्यते। तदेतत् तारणक्रियाया आश्रयत्वेऽपि अव्यावृतत्वात् महाविषयत्वात् तारयन्तमित्यपदिश्यते। त एते त्रयः साधनोपायैराब्रह्मणः प्राणिनोऽभिप्रेतमर्थं प्राप्नुवन्ति। आह च—[1]"साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽपरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्राहुरुपदेशाय ग्लायन्तोऽपरे बिलमग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च" (निरुक्त, नै. का.) इति। बिल्मं शासनम्—सम्यक् प्रतिभासाय विशिष्टः संकेत उक्तः। एषां तु साधनोपायानां प्रत्यनीकप्रतिषेधाय दुःखविघातत्रयम्। दुःखानि त्रीणि—आध्यात्मिकादीनि।

[113a] तत्र चाध्यात्मिकानां वातादीनां सिद्धिप्रत्यनीकानामायुर्वेद-क्रियाऽनुष्ठानेन विघातं कृत्वा पूर्वेषां त्रयाणामन्यतमेन साधयति सा चतुर्थी सिद्धिः प्रमोदमित्यभिधीयते। कथम्? निवृत्तरोगा हि प्राणिनः प्रमोदन्त इति कृत्वा। यदा त्वाधिभौतिकानां मानुषादिनिमित्तानां सिद्धिप्रत्यनीकानां सामादिना यतिधर्मानुगुणेन वोपायेन पूर्वेषां त्रयाणामन्यतमेन साधयति, सा पञ्चमी सिद्धिः प्रमुदितमित्यभिधीयते। कथम्? अनुद्विग्नो हि प्रमुदित इति कृत्वा। यदा तु शीतादीन्याधिदैविकानि द्वन्द्वानि सिद्धिप्रत्यनीकानि स्वधर्मानुरोधेन प्रतिहत्य पूर्वेषां त्रयाणामन्यतमेन साधयति, सा षष्ठी सिद्धिर्मोदमानमित्यभिधीयते। कथम्? द्वन्द्वानुपहता हि प्राणिनो मोदन्त इति कृत्वा। सुहृत्प्राप्तिः—यदा तु कुशलं संस्पृष्टं सन्मित्रमाश्रित्य सन्देहनिवृत्तिं लभते, सा रम्यकमिति सप्तमी सिद्धिरपदिश्यते। रम्यो हि लोके सन्मित्रसम्पर्कः, तस्य संज्ञायां रम्यमेव रम्यकम्। दानम्—यदा तु दौर्भाग्यं दानेन अतीत्य पूर्वेषां त्रयाणामन्यतमेन साधयति साऽष्टमी सिद्धिः [2]सदाप्रमुदितमित्यभिधीयते। सुभगो हि सदा प्रमुदितो भवति, तस्माद् दौर्भाग्यनिवृत्तिः सदाप्रमुदितम्। इत्येवमेताः सिद्धयोऽष्टौ व्याख्याताः। एतासां संश्रयेणाभिप्रेतमर्थं यतः संसाधयन्तीत्यतः पूर्वाचार्यागतं मार्गमारुरुक्षुस्तत्प्रवणः स्यादिति।

---

1 The usual reading is :— ... ...वरेभ्योऽसाचात्कृतधर्मस्य......मन्त्रान् सं प्रादु... ग्लायन्तो वरे....

2 In enumerating the names of differnt *Siddhis* Gauḍa states, आसामष्टानां सिद्धीनां शास्त्रान्तरे संज्ञाः कृताः—तारम्, सुतारम्, तारतारम्, प्रमोदम्, प्रमुदितम्, प्रमोदमानम्, रम्यकम्, सदाप्रमुदितमिति. Māṭhara reads मोहनम् in place of प्रमोदमानम्.

Also see, "These eight sorts of perfection are also called by the sages of antiquity : (1) crossing by oneself ; (2) crossing well ; (3) crossing all ; (4) crossing with joy ; (5) crossing with an excessive joy ; (6) crossing with full joy ; (7) crossing by love ; (8) crossing by universal love."—Paramārtha.



आह—कः पुनर(त्र) हेतुर्येन पुरुषार्थत्वाविशेषे सति गुणानां सर्वसिद्धिनिमित्तं त्वनुभवतीत्युच्यते। यस्मात्—**सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः।** साध्यप्रतिपत्तिसामर्थ्यसामान्यमङ्गीकृत्याह सिद्धेरिति। पूर्वो विपर्ययाशक्तितुष्टिलक्षणः, अङ्कुश इवाङ्कुशः—निवर्तनसामान्यात्। नित्यप्रवृत्तस्यापि प्रधानात् सिद्धिस्रोतसो विपर्ययाशक्तितुष्टिप्रतिबन्धात् सर्वप्राणिष्वप्रवृत्तिर्भवति। [113b] विपर्ययात् तावत् स्थावरेषु, ते हि मुख्याः स्रोतसो विपर्ययात्मानः। अशक्तेस्तिर्यक्षु, ते हि तिर्यक्स्रोतसोऽशक्त्यात्मानः। तुष्टिर्देवेषु, ते ह्यूर्ध्वस्रोतस स्तुष्ट्यात्मानः, मानुषास्त्वर्वाक्स्रोतसः संसिद्ध्यात्मानः। तस्मात् त एव तारकादिषु प्रवर्तन्ते। सत्त्वरजस्तमसां चाङ्गाङ्गिभावनियमाद् विपर्ययाशक्तितुष्टिभिः प्रतिहन्यन्त इति न सर्वेषां सर्वदा सिद्धिर्भवति। अत एतदुक्तं सिद्धेः पूर्वोऽङ्कुशस्त्रिविध इति। यथा च सिद्धेः विपर्ययाशक्तितुष्टयः प्रतिपक्षाः, एवं सिद्धिरपि विपर्ययादीनाम्। सा ह्युत्पन्ना सर्वानेतान् निवर्तयति। कथम्? अविपरीतज्ञानं विपर्ययम्। अतीतानागतवर्तमानेषु सन्निकृष्टेषु विप्रकृष्टेषु इन्द्रियग्राह्येष्वतीन्द्रियेषु चाप्रतिघाताद्शक्तिं पुरुषस्य प्रकृतिविकारव्यतिरिक्तस्य दर्शनात् सर्वासु भूमिषु तुष्टिम् (?)। एवमेतानि स्रोतांसि प्राणादयः कर्मयोनयश्च व्याख्याताः। एतेषां मार्गेऽवस्थापनात् परां सिद्धिं कैवल्यलक्षणमचिरेण प्राप्नोति। आह च—

"योनीनां सप्रमाणानां सम्यङ्मार्गे नियोजनात्।
स्रोतसाञ्च विशुद्धत्वात् निरासङ्गमतिश्चरेत्"॥ इति।

इति युक्तिदीपिकायां नवममाह्निकम्।

एवं यत् पूर्वमपदिष्टम्—संयोगकृतः सर्गः ( का, २१ ) इति, तद् व्याख्यातम्। अत्रेदानीम् आ चा र्या णां विप्रतिपत्तिः—धर्मादीनां शरीरमन्तरेणानुत्पत्तेः, शरीरस्य च धर्माद्यभावे निमित्तान्तरासम्भवादुभयमिदमनादि ; तस्मादेकरूप एवायं यथैवाद्यत्वे तथैवातिक्रान्ता[ 114a ]स्वनागतासु कालकोटिषु सर्ग इति। आचार्य आह— नैतदेवम्, किं तर्हि प्राक् प्रधानप्रवृत्ते धर्माधर्मयोरसम्भवो बुद्धिधर्मत्वात्, तस्याश्च प्रधानविकारत्वात्। ततस्तद्व्यतिरिक्तं शब्दाद्युपलब्धि-लक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं चार्थमुद्दिश्य सत्त्वादयो महदहङ्कार-तन्मात्रेन्द्रिय-भूतत्वेनावस्थाय परमर्षि-हिरण्यगर्भादीनां शरीरमुत्पादयन्ति, षट् सिद्धिक्षयकालोत्तरं तु गुणविमर्दवैचित्र्यात् रजस्तमोवृत्त्यनुपाति संसारचक्रं प्रवृत्तम्।

[ न विना भावैर्लिङ्गं न विना लिङ्गेन भावसंसिद्धिः।
लिङ्गाख्यो भावाख्य स्तस्माद् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥ ]

**न विना भावैर्लिङ्गम्**— देव-मनुष्य-तिर्यग्भावेन व्यवतिष्ठत इति वाक्यशेषः। **न विना लिङ्गेन [1]भावसंसिद्धिः**—संसिद्धिरत्र निष्पत्तिरभिप्रेता। **लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः**—सोऽयं लिङ्गाख्यो भावाख्यश्च षट्सिद्धिक्षयकालादूर्ध्वं भवति, गुणसमनन्तरं तु अधिकारलक्षणः ; तस्माद् द्विधा सर्गोऽधिकारलक्षणो भावाख्यश्च। ये षां तु धर्माधर्मशरीरयोः पर्यायेण हेतु-हेतुमद्भावस्तेषां 'कारणमस्त्यव्यक्तम्' ( का, १६ ) इत्यत्र प्रतिविहितम्। येऽपि च सां ख्याः एवमाहुः—"धर्माधर्माधिकारवशात् प्रधानस्य प्रवृत्तिः" इति तेषामन्यतर-परिकल्पनाऽऽनर्थक्यमिति। कथम् ? यदि तावदधिकार एवायं प्रधानप्रवृत्तयेऽलम्, किं धर्माधर्माभ्याम्। अथ तावन्तरेणाधिकारस्य प्रधानप्रवृत्तावसामर्थ्यम्, एवमपि किमधिकारेण—तयोरेव प्रवृत्तिसामर्थ्यात्। तस्मादधिकार-भावनिमित्तो द्विधा सर्गः। तत्र यथेदं शरीरमविभक्तं धर्मार्थ-काम-मोक्षलक्षणासु क्रियासु विभक्तं भवेदित्यतः पाण्यादि-विकल्पोऽस्य भवति, एवं सत्त्वसर्गोऽप्यविभक्तो धर्मार्थ-काम-मोक्षलक्षणासु क्रियासु असमर्थो भवेदिति।

---

1 Others read, भावनिर्वृत्तिः



[ अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥ ]

**अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति, मा[ 114b ]नुष्यश्चैकविधः**—अष्टौ विकल्पा अस्य सोऽयमष्टविकल्पः, अष्टप्रकारोऽष्टभेद इत्यर्थः। तद् यथा—ब्रह्म-प्रजापतीन्द्र-पितृ-गन्धर्व-नाग-रक्षः-पिशाचाः। तैर्यग्योनश्च पञ्चधा भवति—पशु-मृग-पक्षि-सरीसृप-स्थावराः। मानुष्यश्चैकविधः—जात्यन्तरानुपपत्तेः।

आह—किमेतावानेव भूतसग-विकल्पः, आहोस्विदन्योऽस्तीति। उच्यते—विकल्पान्तरमस्त्येतेषामेव स्थानानामन्तर्गणभेदात्। अयं तु **समासतो भौतिकः सर्गः।** किम्—उपदिष्ट इति वाक्यशेषः। तत्र देवानां साध्यरुद्रादिभेदात् तिरश्चां ग्राम्यारण्यादिभेदात् मानुषाणां च ब्राह्मण-क्षत्रिय-विट्-शूद्रभेदात्। उद्भिद्भेदश्च विस्तरेणापदिश्यमान आनन्त्यमापादयेत्। तस्मात् समासतो भूतसर्गोऽपदिश्यते।

आह—विकल्पान्तरवचनम्, स्रोतोभेदात्। दैवमानुष-तैर्यग्योना इति त्रिविधो भूतानां विकल्पोऽपदिश्यते, स्रोतांसि तु चत्वार्युक्तानि ; तस्माद् विकल्पान्तरं वक्तव्यमिति। उच्यते—न, गुणधर्मसंग्रहसामर्थ्यात्। सत्त्वबहुलास्तूर्ध्वस्रोतसः, रजोबहुला अर्वाक्स्रोतसः, तमोबहुलास्तिर्यक्स्रोतसो मुख्यस्रोतसश्च। तस्मदानयोरभेदेनोपदेशः।

आह—असुराद्युपसंख्यानं कर्तव्यम्। इतरेष्वनन्तर्भावाद् भेदेनैवोपदेशः कार्यो न तु दैवमानुषतिरश्च इति। उच्यते—न उक्तेष्वव तत्संग्रहात्। असुराणां तावत् ऐन्द्र एव स्थानेऽन्तर्भावः पूर्वदेवत्वात्, पूर्वदेवा ह्यसुराः। किञ्च—पर्यायेणेन्द्रत्वात्। धन्विप्रभृतीनां पर्यायेणेन्द्रत्वं श्रूयते। तथा यक्षाणां रक्षःस्वेकरूपत्वात्। किन्नरविद्याधराणां गन्धर्वेषु, समानशीलत्वात्। प्रेतानां पितृष्वधिपतिसामान्यात्। तस्मात् त्रिविकल्प एव भूतसर्गः। स चायम्—

[ ऊर्ध्वं सत्त्वविशालस्तमोविशालस्तु मूलतः सर्गः।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥ ]

**ऊर्ध्वं सत्त्वविशालः**—ऊर्ध्वमित्यनेनाष्टौ देवस्थानान्याह। तत्रा[115a]यं सर्गः सत्त्वविशालः। पिशाचेभ्यो रक्षसाम्, रक्षोभ्यो नागानाम्, नागेभ्यो गन्धर्वाणाम्, गन्धर्वेभ्यः पितॄणाम्, पितृभ्यस्त्रिदशानाम्, तेभ्यः प्रजापतीनाम्, तेभ्योऽपि ब्रह्मणः। एवं विशालग्रहणं समर्थितं भवति। **तमोविशालस्तु मूलतः सर्गः।**

मूलतस्तु सर्गस्तमोविशालः। पशुभ्यो हि मृगाणां प्रकृष्टतरं तमः, मृगेभ्यः पक्षिणाम्, पक्षिभ्यः सरीसृपाणाम्, सरीसृपेभ्यः स्थावराणाम्। **मध्ये रजोविशालः**—देवेभ्यस्तिर्यग्भ्यश्चावकृष्टासु भूमिषु यथा यथा सत्त्वतमसो निर्ह्रासः, तथा तथा रजसो वृद्धिः। मनुष्यास्तूभयोर्मध्यमिति तत्र परमः प्रकर्षो रजसः। अर्वाक्स्रोतसः सिद्धिरूपत्वादत्यन्तं क्रियाप्रवृत्तत्वात्। यथा च मानुषेषु रजःप्रकर्षः; एवं ब्रह्मणः स्थाने सत्त्वस्य, स्थावरेषु तमसः। स खल्वयम्—**ब्रह्मादिस्तम्बपर्यन्तः** चतुर्दशभेदस्त्रिविकल्पः सत्त्वाद्यतिशयनिर्ह्रास-विषयभावेन यः सर्गो व्याख्यातः।

[ अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्ते स्तस्माद् दुःखं समासेन ॥ ५५ ॥ ]

**अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।** जराकृतं मरणकृतं जरामरणकृतम्। तत्र जराकृतं तावत्—यथा बलितरङ्गितगात्रत्वम्, दण्डमन्तरेण चङ्क्रमणादिष्वप्रवृत्तिः, सर्वेन्द्रियाणां विषयोपभोगेष्वसामर्थ्यम्, प्रबलकासश्वासता, सास्राविलेक्षणता, दशनानामस्थिरत्वम्, वर्णविकृतिः, शैथिल्यमभिव्याहारसङ्गो मन्दा स्मृतिरित्येवमादि। मरणकृतमपि पृथिव्यादीनां शरीरभावेनावस्थितौ [1]सहभावप्रतिपक्षता, स्वभावभेदात् स्थिति-संग्रह-पक्ति-व्यूहावकाशदानादेरुपकारस्य प्रच्युतिः। इन्द्रियाधिष्ठानविकारात् शब्दस्पर्शरूपरसगन्धानां सतामग्रहणमसतां च ग्रहणमभूताकारं सम्भवविपरीतं वा सर्वार्थानां ग्रहणम्। तद् यथा पौर्णमास्यां दक्षिणतः खण्डस्य इन्दुमण्डलस्य पिशाचादीनां पाण्डुरस्य च नभस इत्यादि। **[ 115b ]** तथा वातादिवैषम्यात् समुपजनितानेकप्रकारव्याधिः प्रभ्रश्यमानसकलेन्द्रियवृत्तिः स्रस्ताङ्गः ताम्रपीतास्राविलेक्षणो भ्रमदाहश्वासादिपरिगतान्तर्मर्मसन्धिर्जलार्थं दिशोऽवलोकयन् स ब्रह्मलोके(कादि ?)ष्वपि लोकेषु त्रातारमविन्दन् रागाद्यनेककालात् पक्वेनात्मग्रहेणात्मकार्यकरणोपह्रियमाणबुद्धिर्मन्दमन्देष्वपि स्मृतिप्रलम्भेषु दयितजनस्यात्मनश्चानुस्मरन् दशविधात् कुटुम्बाद् यः प्रभ्रश्यते, सोऽयमवश्यम्भावी सर्वसत्त्वानां प्रकृष्टोद्वेगकारी चाव्युतपन्नश्चापरिहार्यश्चानियतकालश्च महात्मभिः परमर्ष्यादिभिरन्धतामिस्रशब्देनापदिष्टो मरणकृतं दुःखम्। तच्चेदं दुःखं प्रधानमहदहङ्कार-तन्मात्रेन्द्रिय-भूतविशेषलक्षणस्य तत्त्वपर्वणः चैतन्यासम्भवात् पुरुष एव चैतन्यशक्तियोगादुपलभते। तदपि समीक्ष्योक्तमाचार्येण—अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुष इति।

1 The Ms. reads, सहभावं तितृपचतां स्वभावभेदात् रतिसंग्रहापच्चि……



आह—जन्मकृतस्योपसंख्यानम्। यथैव हि जरामरणं चात्मनः प्रकृष्टोद्वेगकारकमेवं जन्मापि। तथा ह्ययं मातुरुदरे जरायुपरिवेष्टितशरीरोऽमेध्यपरिप्लुतो व्रणमात्रायां गर्भधान्यां यथासुखमसम्भवात् परिपीडितगात्रो मातुरशनादिभिः पीड्यमानो गर्भवासे दुःखमनुभूय पश्चात् संवृतेनास्थिद्वयविवरेण निःसृतो मूत्ररुधिरकलिलैः परिषिक्तगात्रो बाह्येन वायुना करैश्च संस्पर्शादसिभिरिव तुद्यमानः स्वसंवेद्यं दुःखमात्मनि वर्तमानमाख्यातुमसमर्थः स्वसुखदुःखसामान्यात् परत्र परिकल्पितसुखदुःखबुद्धिभिर्दृढगात्रैरुपचित-क्लेशैश्च यात्यमानो जन्मदुःखमनुभवति, तस्मात् तदपि वक्तव्यमिति। उच्यते—न, अव्यापित्वात्। मानुषतिरश्चामेव जन्मकृतं दुःखं भवति न देवानाम्। कथम्? तड़िद्विलसितवत् क्षणमात्रेण शरीरप्रादुर्भावात्। **[ 116a ]** जरामरणकृतं तु तेष्वपि न निवर्तते, तस्मात् प्राधान्यादेतदेवोपदिष्टं नेतरदिति।

आह—इतरग्रहणाप्रसङ्गः, तुल्यत्वात्। न हि देवस्थानेषु जरामरणं वा श्रूयते, तस्मादव्यापित्वात् तयोरप्यग्रहणप्रसङ्गः। उच्यते—न, स्मृतिवचनात्। जीर्यतेऽनयेति जरा क्षय इत्युक्तं भवति। स च देवभूमावपि भवति। कस्मात्? एवं ह्याह—

"रजोविषक्तिरङ्गेषु वैवर्ण्यं म्लानपुष्पता।
पतिष्यतां देवलोकात् प्राणिनामुपजायते" ॥

शक्रादीनां व्याधिश्रवणात् शरीरक्षयः। एवं ह्याह, त्वाष्ट्रीयं साम भवति—[1]"इन्द्रं क्षाममपि न सर्वभूतानि प्रस्वापयितुं नाशक्नुवं स्तमेतेन साम्ना त्वाष्ट्रीयेण स्वापयत्' इति। तथा प्रजापतेर्वायुरक्षयीत्, दक्षाभिशापाच्च सोमस्य क्षयः। तथा, प्रजापतिर्वै सोमाय राज्ञे दुहितॄरदात् नक्षत्राणि, स रोहिण्यामेवावसत्। तान्यनपेक्ष्यमाणानि पुनरगच्छन्, तस्मात् स्वानानुपेयमाना पुनर्गच्छति। तान्यन्वागच्छत्, तानि पुनरयाचत, तान्यस्मै न पुनरददात्। सोऽब्रवीत् सर्वेष्वेव समावत् वसाथ ते पुनर्दास्यामीति। स रोहिण्यामेवावसत्, तस्मिन् अनृते यक्ष्माऽगृह्णात्। चन्द्रमा वै सोमो राजा, यद् राजानं यक्ष्माऽगृह्णात् तद् राजयक्ष्मनो जन्म। स तृणमिवाशुष्यत्, स प्रजापता अनाथत। सोऽब्रवीत्—सर्वेष्वेव समावत् वसाथ त्वाऽतो मोक्ष्यामीति। तस्माच्चन्द्रमाः सर्वेषु नक्षत्रेषु समावद् वसति। तं वैश्वदेवेन चरुणाऽमावस्यां रात्रीमयजत्, तेनैनं यक्ष्मोदमुञ्चदित्यादि। तस्माद् देवभूमावपि जराकृतं दुःखमस्ति। तथा मरणकृतम्—भूम्यन्तरगमनात् तत्रोत्-

1 The Ms. reads, इन्द्रस्याममपि……साम्ना त्वाष्ट्रीयत् स्वापयदिति.

पन्नानां ययातिरुदाहरणम्। तथा गो प थ ब्रा ह्म ण म्—[1]"देवानां ह वा पञ्चदश शतानि आसंस्तानि ब्रह्मकिल्बिषादक्षीयन्त ततस्त्रयस्त्रिंशद्देवासत। तदेतदृचाऽभ्युक्तम्—सोदर्याणां पञ्चदशानां शतानां त्रयस्त्रिंशदुदशिष्यन्त देवाः, शे[116b]षाः प्रासीयन्त" इति। श्वेतारण्ये चान्तकस्य रुद्रेण कृतं दुःखमस्तीति। तूदाहरणमात्राद् वा—अथवोदाहरणमात्रमेव दुःखानाम्, आदिशब्दलोपो वा वक्तव्यः। जरामरणादिकृतं जरामरणकृतमेवोदाहरणत्वेनाभिप्रेतम्, न पुनर्दुःखान्तरम्। कस्मात्? तत्रापि ह्यादिशब्दलोप उदाहरणमात्रत्वात्। शक्त्या परिकल्पयितुमिदमित्युच्यते—न सर्वदुःखास्पदत्वात्। सर्वेषां हि दुःखानामास्पदं जरामरणकृतं साधारणम्। कथम्? तद् बन्धुमित्राणामप्युद्वेगहेतुत्वात्; न तु जन्मकृतम्—सम्बन्धिनां प्रहर्षनिमित्तत्वात्। यतश्च ब्रह्मादौ स्तम्बपर्यन्ते जगति जरामरणकृतं दुःखं न कश्चिदतिवर्तते। **लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं समासेन।** सुखलेशस्य तद्व्याप्तत्वात् यावदिदं लिङ्गं न निवर्तते तावदवश्यं दुःखेन भवितव्यम्, पर्यायेण संस्कारस्य सामर्थ्याल्लोकान्तरोपपत्तेः। तथा चाह—

"सुखञ्च दुःखञ्च हि संशयञ्च वारेणायं सेवते तत्र तत्र"।

कथं पुनर्दुःखेन व्याप्तं सुखमिति चेत्—आब्रह्मणोऽशुद्धिक्षयातिशयोपपत्तेः, तस्याश्च दुःखमूलत्वात्। प्रजापतेरक्षिरोगश्रवणात्, इन्द्रस्य कामोपतापात्, गौतमपरिभवात् रम्भायाश्चाभिशापात् पाषाणभावोपपत्तेः, नागानां सर्पसत्रायासात्, वैश्रवणस्य यस्काभिशापाद्(?) व(ह?)स्तिभात्रोपपत्तिः, [2]जरत्कारोः पितॄणां च गर्तेऽवलम्बनात्, पिशाचानां मन्त्रौषधिमङ्गलप्रयोगैरुद्वासनात्, मानुषतिरश्चां प्रत्यक्षत एव प्रायेण दुःखास्पदत्वात्। तस्मान्नास्ति संसारे कश्चित् प्रदेशो यत्र सह लिङ्गेन आत्मानं दुःखं नावाप्नुयादित्यत एवं प्रयतितव्यं येन लिङ्गस्यैवात्यन्तोच्छेदः, ततो हि सर्वदुःखानामत्यन्तोपशमः। [117a]समासग्रहणन्तु सुखमोहयोरवकाशदानार्थम्, अन्यथा संसारे तयोरभावः एवाभ्युपगतः स्यात्। एवं यथावत् सर्गमुपाख्यायोपसंहरन्नाह—

**इत्येष प्रकृतिकृतः प्रवर्तते [3]तत्त्वभूतभावाख्यः।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६॥**

1 This quotation cannot be traced in the Bib. Ind. edition of *Gopatha Brāhmaṇa*.

2 See *Mahābhārata*, I. 13.

3 Gauḍa and Vācaspati read, महदादिविशेषभूतपर्यन्तः.



इतिकरणेन सर्गसमाप्तिं द्योतयति। एष इत्युक्तमपि प्रत्याम्नायार्थं पुनरपेक्षते, प्रकृत्या कृतः—प्रकृतिकृतः। अनेन वाक्यपरिसमाप्त्यर्थम्, वीतावीताभ्यां सिद्धं प्रधानास्तित्वम्। अवादिप्रतिषेधं चापेक्षते—प्रकृतिकृत एव नाण्वादिकृतः। प्रवर्तत इति क्रियाप्रबन्धमाह—प्रवृत्तो न प्रवर्त्स्यति, किं तर्हि प्रवर्तत एवानन्तानां शरीरादिभावेन परस्परानुग्रहेण च। नेयं क्रिया कदाचिदपि भूतभविष्यद्रूपा भवति, किं तर्हि वर्तमानरूपा; यथा—वहन्ति नद्यः, तिष्ठन्ति पर्वता इति। तत्त्वभूतभावाख्य इत्युक्तानां निगमार्थं प्रत्याम्नायं करोति—तत्त्वाख्यो महदादिर्भावाख्यो धर्मादिर्भूताख्यो व्योमादिः। पुरुषं पुरुषं प्रति विमोक्षः प्रतिपुरुषविमोक्षः, तदर्थं प्रतिपुरुषविमोक्षार्थम्—सर्वपुरुषाधिकारनिबद्धायाः सर्वशक्तेर्निराकाङ्क्षीकरणार्थमित्यर्थः। स्वार्थ इव परार्थारम्भः—कार्यकारणभावेन। तत्र कार्यस्य तावत् शब्दादेः स्वार्थ इवेन्द्रियाणां विषयभावः। इन्द्रियाणामप्राप्तविषयाणां लौल्यमधिष्ठानविकारानुमेयं स्वार्थमिव। करणानाञ्च संकल्पाभिमानाध्यवसायानां विषयद्वारिभावोपगमनम्, मनःप्रभृतीनां च स्वप्रवृत्तिविषयत्वम्, मनोऽहङ्कारयोश्च बुद्धौ स्वप्रवृत्त्युपसंहारो बुद्धेश्च शान्तघोरमूढत्वं व्यवसायकर्तृत्वञ्च, सत्त्वरजस्तमसां च प्रकाशप्रवृत्ति-नियमलक्षणैर्धर्मैः परस्परोकारित्वम्। न चैष स्वार्थः सर्वस्यास्याचेतन्यात्, किं तर्हि परार्थ एवायमारम्भः संघा[117b]तत्वादित्याह।

यदुक्तं प्रतिपुरुषविमोक्षार्थमयमारम्भः इति तदयुक्तम्—आचार्यविप्रतिपत्तेः। [1]प्रतिपुरुषमन्यत् प्रधानं शरीराद्यर्थं करोति। तेषाञ्च माहात्म्यशरीरप्रधानं यदा प्रवर्तते तदेतराण्यपि, तन्निवृत्तौ च तेषामपिनिवृत्तिरिति पौ रि कः सांख्याचार्यो मन्यते। तत् कथमप्रतिषिध्यैका प्रकृतिरभ्युपगम्यत इति। उच्यते—न, प्रमाणाभावात्। न तावत् प्रत्यक्षत एव तच्छक्यं निश्चेतुम्, प्रधानानामतीन्द्रियत्वात्, लिङ्गञ्चासन्दिग्धं नास्ति, आप्ताश्च नो नाभिदधुरतो मन्यामहे नैतदेवमिति। किञ्च, एकेनार्थपरिसमाप्तेः। अपरिमितत्वादेतदेकं प्रधानमलं सर्वपुरुषशरीरोत्पादनाय। तस्मादन्यपरिकल्पनाऽऽनर्थक्यम्। परिमितमिति चेदथमतम्, परिमितं प्रधानमिति नोच्छेदप्रसङ्गात्। एवमपि तस्योच्छेदः प्राप्तः क्षीरवत्; तथा च संसारोच्छेदप्रसङ्गः। किञ्च—अनवस्थाप्रसङ्गात्। एकस्येश्वरस्य योगिनो वेच्छायोगादनेकशरीरत्वम्। तत् परिमितादयुक्तम्। प्रतिशरीरं वा प्रधानपरिकल्पने प्रधानानवस्था भवति। परिमितशरीरकारणत्वाभ्युपगमादन्यपरिकल्पनाऽऽनर्थक्यम्, ततश्च प्रधानैकत्वमेव। तस्मादयुक्तं प्रतिपुरुषं प्रधानानीति।

1 Cf. मौलिक्यसांख्या ह्यात्मानमात्मानं प्रति पृथक् प्रधानं वदन्ति, उत्तरे तु सांख्याः सर्वात्मस्वप्येकं नित्यं प्रधानमिति प्रपन्नाः—Commentary of Guṇaratna on the Sāṁkhya-Section of *Ṣaḍdarśana-Samuccaya*.

यत्तूक्तं माहात्म्यशरीरप्रधानप्रवृत्तावितरेषां प्रवृत्तिस्तन्निवृत्तौ निवृत्तिरित्यत्र ब्रूमः—न, अतिशयाभावात्। यथा क्षेत्रज्ञानां निरतिशयत्वादितरेतराप्रवर्तकत्वमेवमेषामपि सातिशयत्वे वा प्रधानानुपपत्तिप्रसङ्गः—वैषम्यात्। तस्माद् युक्तं प्रतिपुरुषविमोक्षार्थमेका प्रकृतिः प्रवर्तत इति।

आह—तदनुपपत्तिराचेतन्यात्। इहाचेतनानां घटादीनामुद्दिश्य प्रवृत्तिरदृष्टा। सा चेदियमचेतना प्रकृतिरस्या अप्युद्दिश्य पुरुषार्थं प्रवृत्तिर्नोपपद्यते। [ 118a ]भवति चेच्चैतन्यम्, तर्हि प्राप्तमस्याः। तत्र यदुक्तं प्रतिपुरुषविमोक्षार्थं प्रकृतेः प्रवृत्तिरिति, एतदयुक्तमिति। उच्यते—न, दृष्टान्तोपपत्तेः।

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥ ५७॥**

यथा क्षीरमचेतनं वत्सविवृद्धिमुद्दिश्य प्रवर्तते, एवं प्रधानमपि पुरुषविमोक्षमुद्दिश्य प्रवर्तते। न चास्य चैतन्यं स्यात्। साध्यत्वादयुक्तमिति चेत्, स्यान्मतम्—साध्यमेतत् किं क्षीरस्योद्दिश्य वत्सविवृद्धिं प्रवृत्तिः, अथ नेति। तस्मादुदाहरणं साध्यत्वादयुक्तमिति। एतच्चायुक्तम्। कस्मात्? तदभावेऽभावात्, तद्भावे च भावात्। यत्र नास्ति वत्सविवृद्धिस्तत्र न क्षीरस्य प्रवृत्तिरुपलब्धा, यत्रास्ति तत्रोपलब्धा। यद्यस्मिन् सति भवति तस्य तदर्था प्रवृत्तिर्दृष्टा। तद् यथा—घटे कुम्भकारस्य। स चायमीदृशोऽस्माकमुद्देशोऽभिप्रेतः। यदुत तादर्थ्यं तस्मान्नास्त्युदाहरणसाध्यत्वमिति। असद्भावाभिधानात् सत्कार्यविरोध इति चेत्—न, व्यक्तिपर्यायत्वात्। व्यक्तिपर्यायो हि तदिति शास्त्र-लोकप्रामाण्यात्। शास्त्रं तावत्—'सत्तामात्रो महान्', व्यक्तिमात्र इत्यर्थः। लोकेऽपि नास्त्यस्मिन् कूपे सलिलमित्युच्यते, न क्वचिदपि कूपे सलिलं नास्त्यभिव्यक्तं न तत् भवति। तस्मान्न सत्कार्यविरोधः। अदृष्टप्रेरणत्वादसिद्धिरिति चेदथ मतम्, धर्माधर्मप्रेरितं क्षीरं प्रवर्तते न वत्सविवृद्ध्यर्थमिति। तदप्ययुक्तम्। कस्मात्? दोषसाम्यात्। धर्माधर्मावचेतनौ विवृद्धिकाले क्षीरं प्रवर्तयतस्तदवसाने च निवर्तयतः। तस्मादित्थमपि परिकल्प्यमाने समानो दोषः। ईश्वरप्रेरणादिति चेत्, स्यान्मतम्—ईश्वरस्तत्र क्षीरं प्रवर्तयते वत्सार्थं न स्वयमिति। तदयुक्तम्। कस्मात्? प्रतिषेधात्। प्राक् प्रतिषिद्धमीश्वरकर्म। तस्मादिदमप्ययुक्तमेवं चेदवस्थितो दृष्टान्तः। वार्षगणानां तु—[ 118b ]यथा स्त्रीपुंशरीराणामचेतनानामुद्दिश्येतरेतरं प्रवृत्तिस्तथा प्रधानस्येत्ययं दृष्टान्तः।



आह—कथमवगम्यते तादर्थ्यादुत्पन्नेन व्यक्तेन पुरुषस्य सम्बन्धो न पुनः सान्निध्यमात्रात् भिक्षुवदिति। उच्यते—न, अन(प)वर्गप्रसङ्गात्। सान्निध्यमात्रात पुरुषोपभोगमभ्युपगच्छतो नापवर्गप्रसङ्गः स्यान्नित्यसान्निध्यात्। तस्मादयुक्तमेतत प्रवर्तयितारं प्रति। कार्यकरणानां प्रवृत्तिरयुक्तेति चेत्, स्यान्मतम्—अप्रवर्तयिता कृष्यादीनां भिक्षुरतो न तेषामपि तं प्रतिप्रवृत्तिः; एवमप्रवर्तयिता कार्यकरणानां पुरुषः, तस्मात् तेषामपि तं प्रति प्रवृत्तिरयुक्तेत्येतदप्यत एवानैकान्तिकम्। वत्सो हि क्षीरस्याप्रवर्तयिता, अथच तं प्रति तस्य प्रवृत्तिः। तस्माद् युक्तमेतत्—पुरुषविमोक्षार्थं प्रकृतेः प्रवृत्तिर्न चैतन्यप्रसङ्ग इति।

आह—न, अप्रवृत्तिप्रसङ्गात्। यदि प्रधानस्य पुरुषकैवल्यार्था प्रवृत्तिस्तेन तदभावे कैवल्यं सिद्धमेवेत्यप्रवृत्तिप्रसङ्गः। अथ केवले पुरुषे प्रधानं प्रवर्तते, न तर्ह्यस्य तदर्था प्रवृत्तिरिति। उच्यते—

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्॥ ५८॥**

प्रागेवैतदपदिष्टम्—यथा दृश्यदर्शनशक्तियुक्तत्वादन्यतराभावे च तयोरानर्थक्यात् प्रधानपुरुषयोरितरेतरसम्बन्धं प्रत्यौत्सुक्यम्। दृष्टा चोपरमार्थाऽपि लोकस्य औत्सुक्यनिवृत्त्यर्था प्रवृत्तिस्तथा प्रधानस्याप्युपरमार्था प्रवृत्तिः। अथ दृश्यदर्शनशक्त्योरौत्सुक्यनिवृत्त्यर्थं प्रवर्तत इत्येकत्र कृतार्थत्वादितरेष्वप्रवृत्तिप्रसङ्ग इति चेत्, स्यादेतत्—प्रधानम् एकस्य पुरुषस्यात्मानं प्रकाश्योपरमेदेवं दृश्यदर्शनशक्त्योरौत्सुक्यनिवृत्तिर्भविष्यति अप्रवृत्तिश्च इत्येतदपि नोपपन्नम्। कस्मात्? दृष्टान्तान्तरसामर्थ्यात्। तद् यथा, किमुच्यते—

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा [ 119a ] नृत्यात्।**
**पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥५९॥**

तत्र नानावर्णस्वभावविज्ञानानां प्रेक्षार्थिनां पुरुषाणां संघातो रङ्ग इत्युच्यते। नर्तकी च तदाराधना-नृत्यक्रियाऽनेकपुरुषार्था। यदि वाऽत्र कश्चित् ब्रूयात् नृत्ताचार्येण कुशीलवैर्वा दृष्टैवेयं कस्मात् न निवर्तते, कथमकृतार्थत्वात्। एवं सर्वपुरुषाणां कार्यकारणसम्बन्धेनौत्सुक्यवतां निराकाङक्षीकरणार्थं प्रवृत्ता प्रकृतिः कथमेकस्य पुरुषस्यौत्सुक्यनिवृत्तौ कृतार्था स्यात्। तस्मात् नैकस्य पुरुषस्यात्मानं प्रकाश्य प्रकृतेर्निवृत्तिर्युक्तेति। अत्र च [1].... .... .... .... .... ....

1 After this the rest of the folia is left blank. In the beginning

.... .... .... .... .... ....

[ एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥ ]

....[120a]कार्यकरणक्रियासाक्षी पुरुषः । तस्माद् ये भौतिकाः शिरःपाण्यादयो ये चाहङ्कारिकाः श्रवणादयो वचनादयः सङ्कल्पाभिमानाध्यवसायाश्च ते लक्षणविपर्ययात् नाहम्—नाष्टौ प्रकृतयः । तदेतदेवं तत्त्वानामभ्यासैकाग्रमनसो यतेः पुनः पुनरभ्यासात् , एकस्याप्यस्मितारूपस्य परिकल्पितविषयभेद-प्रतिषेधमुखेन **नास्मि नमे नाहमित्यपरिशेषम् ।** आप्रकृतेः प्रतिपक्षग्रहणाद् **अविपर्ययात्** पञ्चस्रोतसोऽस्याविद्यापर्वणो निवृत्तेः शान्तं ध्रुवं सकलभावानुबन्ध-प्रतिपक्षभूतं धर्माद्याप्यायितस्य बुद्धितत्त्वस्यासन्दिग्धमविपरीतं **विशुद्धं केवलमुत्पद्यते ज्ञानम्**—प्राक् विशुद्धं केवलमन्यतरानभिधानमर्थाभेदात् । यदेव विशुद्धं तदेव केवलमित्यर्थाभेदादन्यतरच्छक्यमवक्तुमित्युच्यते । गुणान्तररूपनिवृत्तिहेतुत्वात् रजस्तमोधर्माणां तावत् ग्रहणात् शुद्धं संशयविपर्ययव्यतिरिक्तञ्च केवलं क्षेत्रज्ञपरिज्ञानेऽपूर्वमेव इति ।

आह—तत्समकाल एव शरीरस्य पातः प्राप्नोति सति ध[1].... .... .... ....
.... .... .... .... .... ....

[ सम्यग् ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ॥ ६७ ॥ ]

.... .... .... .... ....वस्थानेनाज्ञानहेतुकं शरीरमिति । उच्यते—अज्ञानहेतुकं शरीरम् । अथ चायं नानात्वदर्शी । **धर्मादीनामकारणप्राप्तौ तिष्ठति संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ।** य.... .... .... .... .... .... ....शरीरान्तरोपार्जिता धर्मादयो न तावत् कारणम् । बुद्धि.... .... .... ....मुपसंप्राप्ता अकृतार्थत्वात् बुद्धिश्च प्रधानं तदा तिष्ठत्ययं नानात्वदर्शी तस्य संस्कारस्य सामर्थ्यात् । को दृष्टान्तः—चक्रभ्रमवद् धृतशरीरः । तद् यथा—

of the next folia, we get some portion of the explanation of Kā. 64. Hence, within this blank space discussions on four Kārikās are left out. Further, it is probable that the 11 th Āhnhika was commenced somewhere in this blank space.

1 Kā. 66 is referred to on p. 24[illegible].



कुम्भकारप्रयत्नविशिष्टेन दण्डेन घटादिनिष्पत्तियोग्या क्रिया चक्रस्य भ्रमः, तेन तुल्यं चक्रभ्रमवत् । यथा चक्रभ्रमणं घटार्थम् , निष्पन्ने घटे पूर्वं संस्कारानुरोधात् न निवर्तते, न च तदा निवृत्तमिति कृत्वा संस्कारक्षयेऽप्यवतिष्ठते ; एवं सम्यग् दर्शनार्थं शरीरं सम्यग्ज्ञानाधिगमेऽपि न निवर्तते पूर्वसंस्कार[120b]वशात, न च तदा निवृत्तमिति-कृत्वा संस्कारक्षयेऽप्यवस्थाप्यत इति ।

यदा तु संस्कारक्षये निमित्तस्य शरीरस्य भेदः, अतः—

[ प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥ ]

**प्राप्ते शरीरभेदे** धर्माधर्मौ कृतार्थौ कारणे बुद्धिलक्षणे लयं गच्छतः । यश्चास्य भूतावयवः शरीरारम्भकः स सर्वभूतेषु, भूतानि तन्मात्रेषु, इन्द्रियाणि तन्मात्राणि चाहङ्कारे, अहङ्कारो बुद्धौ, बुद्धिरव्यक्ते । सेयं तत्त्वानुपूर्वी तदर्थं प्रधानादुत्पन्ना परिसमाप्ते पुनः प्रधाने प्रलयं गच्छति । प्रधानमप्यर्थवशादेवास्य शरीराणि तेषु तेषु जात्यन्तरपरिवर्तेषु करोति । स चार्थश्चरितार्थः । अतः **चरितार्थत्वात् प्रधानविनिवृत्तौ** अतीन्द्रियमसंवेद्यं लघु सर्वत्र सन्निहितम् प्रशस्तमनिर्मितं विशुद्धमक्षयं निरतिशयम्—**एकान्त**(ऐकान्तिक?) **मात्यन्तिकमुभयं कैवल्यमाप्नोति ।** एतच्चावस्थानं बौद्धैर्निरुपाधिविशेषनिर्वाणलक्षणमपवर्गो व्याख्यातः । एतत् परं ब्रह्म ध्रुवममलमभयमत्र सर्वेषां गुणधर्माणां प्रतिप्रलयः । एतत् प्राप्य सर्वायासैः सर्वबन्धनैरनादिकालप्रवृत्तरागद्वेषवियुक्तो मुक्तो भवति । एतदर्थं ब्राह्मणा दयित-पुत्र-दार-सम्बन्धमपहाय गुरुशुश्रूषापराः शरीरमरण्येषु पातयन्ति—कथं नामैकान्तिकमात्यन्तिकञ्च कैवल्यं स्यादिति । यत्रैवोत्थानं शास्त्रस्य तत्रैवोपसंहार आचार्येण कृतः ।

आह—किमर्थं पुनरिदं शास्त्रम्, केन वा पूर्वं प्रकाशितमित्युच्यते । यदुक्तं किमर्थमिति—

[ पुरुषार्थं ज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥ ]

**पुरुषार्थम् ।** कथं नामाज्ञानवशात् तत्संस्कारोपनिपातिनां प्राणिनामपवर्गः स्यादित्येवमर्थमिदं शास्त्रं व्याख्यातम् । यत्तूक्तं केनेति, उच्यते—**गुह्यं परमर्षिणा समाख्यातम् ।** गुह्यमिति गूहनीयम् । रहस्यमकृतात्मनां यमनियमेष्वनवस्थिता-

नामादरादप्यनध्येयम्। [ 121a ] परमर्षिर्भगवान् सांसिद्धिकैर्धर्मज्ञानवैराग्यैश्वर्यैराविष्टपिण्डो विश्वाग्रजः कपिलमुनिः। तेन **कपिलमुनिना समाख्यातम्**—सम्यगाख्यातम्। चिराभ्यस्तस्य विद्यास्रोतसो निर्वचणसामर्थ्यात्। स्यादेतत्—कथमिदं गुह्यमिति ? उच्यते—कथं वेदं गुह्यं न स्यात्, भवाग्रोत्पन्नैरपि सनक-सनातन-सनन्दन-सनत्कुमार-प्रभृतिभिरनित्यानां—**स्थित्युत्पत्ति-प्रलयाश्चिन्त्यन्ते यत्र भूतानाम्।** तत्र स्थितिस्तावत् रूपप्रवृत्ति-फलनिर्देशेनोत्पत्तिरपि 'प्रकृतेर्महान्' (का, २२) इत्यादि। प्रलयोऽपि 'अविभागाद् वैश्वरूप्यस्य' (का, १५) इति वचनात्, औत्सुक्यानुपरमात् प्रकृतिपुरुषयोः स्थितिरुत्पत्तिर्द्रष्टृदृश्यदर्शनशक्त्योः सापेक्षत्वात्। तथा चोक्तम्—

'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः'॥ (का, २१) इति।

प्रलयः—'प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ' (का, ६८) इति। अथवा स्थितिः क्षणभङ्गप्रतिषेधात् कालान्तरेष्वस्यानाशादुत्पत्तिर्विपरिणामात् नाभूतप्रादुर्भावादकस्मादसम्भवात्, प्रलयोऽपि निमित्तान्तरात् तत्स्वाभाव्यादेव भूतानामपि व्यक्तानां निष्पत्तिमतामिति यावत्। एवञ्च महदादयोऽपि परिगृहीता इति।

आह—पुरुषादयस्तर्हि परित्यक्ताः। कथं वा भूत-शब्द इति। उच्यते—वितथप्रतिषेधार्थत्वात्। यावत् किञ्चिदवितथं भूतं तस्य सर्वस्येह स्थित्यादय उच्यन्त इति, उत्पत्तिविनाशप्रतिषेधाविशेषात्। एवमपि पुरुषादीनामुत्पत्तिप्रलयावपि प्राप्नुतः, किं कारणमविशेषादिति। उच्यते—सम्भवतो विशेषणं भवति। तत्र स्थितिरेव पुरुषादीनाम्, इतरेषान्तु स्थित्युत्पत्तिप्रलया इति विज्ञास्यामः।

आह—कस्मै पुनरिदं शास्त्रं परमर्षिणा प्रकाशितमिति ? उच्यते—

[ एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्॥ ७०॥ ]

**एतत् पवित्र[ 121b ]मग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।** तत्र पवित्रं पावनात्, अग्र्यं सर्वदुःख-क्षपणसमर्थत्वात्। पवित्रान्तराणि पुनरेकादश(?) क्षाल्यन्त्यघमर्षण-गङ्गादीनि, तस्मादिदमेवाग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।



आह—सम्प्रदानस्याकस्मिकत्वं धर्मादिनिमित्तानुपपत्तेः। न तावत् परमर्षेर्धर्मार्थं शास्त्रप्रदानमुत्पद्यते फलेनानभिष्वङ्गात्, नार्थकामार्थम्—शिष्याणामनायासप्रसङ्गात्, न मोक्षार्थम्—सांसिद्धिकेनैव ज्ञानेन तत्प्राप्तेः। तस्मात् विपरीतार्थासम्भवात् परिशेषादकस्मादाचार्यः शास्त्रनिधानं प्रददाविति। उच्यते—नाकस्मात्। किं तर्हि ? अनुकम्पया प्रददौ—आध्यात्मिकाधिदैविकाधिभौतिकैर्दुःखैः पीड्यमानमासुरिमुपलभ्य स्वात्मनि च ज्ञानसामर्थ्यात् सति कार्यकारणसम्प्रयोगे दुःखानामप्रवृत्तिं परिज्ञाय शिष्युगुणांश्च कथं नाम यथा मम सुखदुःखेषु ज्ञानोपनिपातात् साम्यमेवमासुरेरपि स्यात्, तद्द्वारेणान्येषामपि पुरुषाणामेवमनुकम्पया भगवान् परमर्षिः शास्त्रमाख्यातवान्। यथा च परमर्षिरासुरये तथा **आसुरिरपि** दशमाय-कुमाराय भगवत्-**पञ्चशिखाय। तेन च बहुधा कृतं तन्त्रम्।** बहुभ्यो जनकवशिष्ठादिभ्यः समाख्यातम्।

अस्य तु शास्त्रस्य भगवतोऽग्रेप्रवृत्तत्वात् न शास्त्रान्तरव(त्) वंशः शक्यो वर्षशतसहस्रैरप्याख्यातुम्।

[ शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतादार्याभिः।
संक्षिप्तमार्यमतिना सम्यग् विज्ञाय सिद्धान्तम्॥ ७१॥ ]

संक्षेपेण तु द्वाव ... .... .... हारीत-[1]बाद्धलि-कैरात-[2]पौरिकर्षभेश्वर-पञ्चाधिकरण-पतञ्जलि-वार्षगण्य-कौण्डिण्य-मूकादिक (?) **शिष्यपरम्परयाऽऽगतं** भगवानीश्वरकृष्णश्च साहायकं शास्त्रं पूर्वाचार्यसूत्रप्रबन्धे गुरुलाघवमनाद्रियमाणः पौरस्त्यात् व्याख्यातव्या .... न गर्भमतिप्रमादं ददातीति ग्रन्थभूयस्त्वमुपजायते। तच्चेदानीन्तनैः प्राणिभिरल्पत्वादायुषो ग्रन्थत एव न सूपपादम्, किं पुनः श्रवणप्रयोगाभ्याम्। [ 122a ]आह च, चतुर्भिः प्रकारैर्विद्यासूपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रयोगकालेन च। तत्र चास्यागमकालेनैवायुः पर्युपयुक्तं स्यात् ततश्च शास्त्रानर्थक्यमित्यस्य मन्दधियामप्याशु ग्रहणधारणप्रयोगसम्पत् स्यादिति ष ष्ठि त न्त्रा दुपाख्यानगाथाव्यवहितानि वाक्यान्येकत उपमृद्य—

शिष्यानुकम्पार्थं यावत्, **ईश्वरकृष्णेन चैतदार्याभिः** सप्तत्या—**संक्षिप्तमार्यमतिना** सर्वसत्वहितप्रवृत्तेन **सम्यग्विज्ञाय सिद्धान्तम्।** कथं चास्य सम्यक् सिद्धान्तविज्ञानस्याप्यनेक-ग्रन्थशतसहस्राख्येयं सांख्यं पदार्थसतत्त्वमखण्डमार्याणां सप्तत्यां संक्षिप्तवान् ? आह च—

---

1 For बाद्धलि, see ... ...कपिलोलूक गार्ग्य-व्याघ्रभूति-बाद्धलि-माठर... ...*Tattvārtha-Rājavārttika*, p. 51.

2 The Ms. reads पौरिकौर्षभेश्वर० Paurika is mentioned on p. 160₁₈.

**सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्ठितन्त्रस्य ।**
**आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥**

यतश्च नारायण-मनु-जनक-वशिष्ठ-द्वैपायनप्रभृतिभिराचार्यैः प्रधानपुरुषादयः पदार्थाः परिगृहीताश्चोपदिष्टाश्च प्रशस्ताश्चातः स्वभावतः प्रसिद्धमैश्वर्यस्य फलतः ऋद्धार्यमार्गमलङ्कर्तुमिति भगवदीश्वरकृष्णेन पदार्थस्वरूपनिरूपणनिपुणसारमतिना परमर्ष्यादियथोक्तागमेन प्रमाणत्रयं पुरष्कृत्य तर्कदृशा विचारः कृतः। न चास्य [1]मूलकनकपिण्डस्येव स्वल्पमपि दोषजातमस्तीति । आह च—

अज्ञानध्वान्तशान्त्यर्थमृषिचन्द्रमसश्च्युता ।
मलिनैस्तीर्थजलदैश्छाद्यते ज्ञानचन्द्रिका ॥ १ ॥

इति सद्भिरसम्भ्रान्तैः कुदृष्टि-तिमिरापहा ।
प्रकाशिकेयं सर्गस्य धार्यतां युक्तिदीपिका ॥ २ ॥

स्फुटाभिधेया मधुराऽपि भारती मनीषिणो नोपखलं विराजते ।
कृशानुगर्भाऽप्यभितो हिमागमे कदुष्णतां याति दिवाकरद्युतिः ॥३॥
नयन्ति सन्तश्च यतः स्वशक्तितो गुणं परेषां तनुमप्युदारताम् ।
इति प्रयात्वेष मम श्रमः सतां विचारणाऽनुग्रहमात्रपात्र[122b]ताम् ॥४॥

इति श्रीयुक्तिदीपिकायां सांख्यसप्ततिपद्धतौ चतुर्थं प्रकरणमेकादशञ्चाह्निकम् ।

सम्पूर्णं कृतिरियं श्रीवाचस्पतिमिश्राणाम् (?) ।

शिवम् ॐ तत्सत् ॥ ॐ हरिः ।

1 Cf. *Kanaka-Saptati* ?

# Alphabetical Index of Verses as are quoted in the Text



1 Also referred to in the *Mahābhāṣya*, I. I. I.

2 See notes on p. 2.

# Alphabetical Index of Prose fragments as are quoted in the Text

1 See, Vāja. Saṁhitā, 24. 20.
2 See, Ts. 2. 1. 1.

# Proper names and Schools

# General Index

# ADDITIONS AND CORRECTIONS

| Printed | Page and lines | Read |
|---|---|---|
| व्यवहारोपलक्ष्यते | ४।१ | व्यवहार उपलक्ष्यते |
| इतरथा ह्यानर्थक्यम् । | २०।९ | इतरथा ह्यानर्थक्यम्, |
| यथा वहन्ती | २६।१६ | यथाऽवहन्ती |
| भोज्यादिवत् | २७।३ | भुंज्यादिवत् |
| प्रतीयन्तीति...२.१८ | ३१।२८ | प्रतियन्तीति...२.१९. |
| क्रियमाणः | ३४।२ | (न) क्रियमाणः |
| न केवलं | ३६।२० | न केवलं, |
| वराहव्रणाङ्कित | ३७।२२ | वराहं व्रणाङ्कित |
| स्थितमेतत् । अनुमानादसिद्धं | ५५।१ | स्थितमेतत्—अनुमानादसिद्धं |
| तदुपलब्धिरिति | ५६।२ | अनुपलब्धिरिति |
| कल्पनायामासत | ५७।१५ | कल्पनाया(मसत?) |
| सिद्धेनार्थान्तरसिद्धेः | ५७।१७ | सिद्धेनार्थान्तर(ा?)सिद्धेः |
| गृह्यते | ५८।१ | गृह्येत |
| प्रत्यक्षाविषयत्वे | ५८।४ | प्रत्यक्षविषयत्वे(?) |
| तथैवोपलभ्यते(?) | ५९।७ | तथैवोपलभ्येत |
| स्पष्टम् | ५९।२८ | दृष्टम् |
| रूपादिदृष्ट | ६०।५ | रूपादि दृष्ट |
| गोलोमविलोमभ्यो(?) | ९५।९ | गोलोमाविलोमभ्यो |
| रूपादिभ्यो चेतनं | ९५।१७ | रूपादिभ्योऽचेतनं |
| बुध्याऽतो | ९५।२७ | बुद्धयाऽतो |
| नह्येकान्तकारिणो | ९६।३ | न ह्येका(र्थ?) कारिणो |
| रूपभेदेऽपि | ९६।१३ | रूप(ा?)भेदेऽपि |
| सत्यप्याकारभेदे...कल्पनाभेद | ९६।१५ | सत्यप्याकार(ा?)भेदे...कल्पना(द्)भेद |
| बन्धः | १०७।२१ | बद्धः |
| विद्यत इति पक्षः । | १०८।५ | विद्यत(?)इति पक्षः— |
| महा | ११३।२९ | सहा |
| षष्ठितन्त्र | १७६।१ | षष्टितन्त्र |